फेंका-फेंकी का मज़ेदार नया खेल ...

# फ़्रिस्बी

## मुफ़्त

फ़्रिस्बी! चॉकलेट
कॉम्प्लान के प्रत्येक
५०० ग्राम के पैक के साथ




लाल, पीली, हरी,
नीली. अनेक रंगों
में मिलती फ़्रिस्बी.
फेंको-उड़ाओ, मौज
करो. कॉम्प्लान
फ़्लाइंग फ़्रिस्बी.

अब चुने हुए स्थानों में उपलब्ध.

**कॉम्प्लान®**
परिपूर्ण नियोजित आहार

GL/13 C/172 HIN




# A special offer for readers of Chandamama only.










**A. WOBBIT:**
Size : 13.5 inches (height)
Price: Rs. 83.00
Add : Rs. 4.80 General Sales Tax for orders placed within Tamil Nadu.
Rs. 8.30 Sales Tax for orders placed outside Tamil Nadu.

**B. TEDDY:**
Size : 10.5 inches (height)
Price: Rs. 93.00
Add : Rs. 5.35 General Sales Tax for orders placed within Tamil Nadu.
Rs. 9.30 Sales Tax for orders placed outside Tamil Nadu.

**C. JUMBO:**
Size : 7 inches (height)
Price: Rs. 68.00
Add : Rs. 3.90 General Sales Tax for orders placed within Tamil Nadu.
Rs. 6.80 Sales Tax for orders placed outside Tamil Nadu.

**D. BOW WOW:**
Size : 6 inches (height)
Price: Rs. 45.00
Add : Rs. 2.60 General Sales Tax for orders placed within Tamil Nadu.
Rs. 4.50 Sales Tax for orders placed outside Tamil Nadu.

**E. FATHER HARE:**
Size : 6 inches (height)
Price: Rs. 25.00
Add : Rs. 1.45 General Sales Tax for orders placed within Tamil Nadu.
Rs. 2.50 Sales Tax for orders placed outside Tamil Nadu.

Look out for Mama Hare and Baby Hare in our next offer to complete the Happy Hare Family.

Our way of saying you're very special to us is by *making you an offer that's* every bit as special. The chance of being the very first people to own a *Cuddles toy. At a price that's — you guessed right — special! And there's* still more you can save. On ordering any of the toys here, you automatically become eligible for discounts on subscription to Chandamama. Rs.6 off on 12 issues and Rs.15 off on 24 issues.







Dear Chandamama,

I have read about your MAIL-A-TOY scheme and have had a good look at the Cuddles range.

Please send me (tick one or more):

☐ Wobbit ☐ Teddy ☐ Father Hare ☐ Jumbo ☐ Bow Wow

I also understand that I can avail a special discount if I subscribe to Chandamama. I would like to subscribe to Chandamama for —

☐ One year (Rs.30 instead of Rs.36)

☐ Two years (Rs.57 instead of Rs.72)

☐ Sorry, I'm not interested in the subscription offer.

Enclosed please find a Postal Order/Money Order for Rs............. drawn in favour of Chandamama Toytronix Pvt Ltd.






Note : This offer is valid only up to 30-6-1990.

I look forward to receiving the toy(s) within a month. I understand that if I am not fully satisfied with the toy(s), I am entitled to a complete refund if I mail it/them back within a week of receiving it/them.

My name: .................................... Date of birth: ....................

Mailing address: ....................................................

....................................................

What are my favourite:

Magazines/Comics : ....................................................

TV Programmes : .............................. Toys ..............................

Pastimes : Reading/Toys/Games/TV/Video/Video games/Others : ..............................






All you have to do is to fill the coupon alongside and mail it to us at Chandamama Toytronix Pvt Ltd, Chandamama Buildings, 188, N.S.K. Salai, Vadapalani, Madras 600 026. Within a month of our receiving your request, you will receive your Cuddles. Just in case you are not fully satisfied, we assure you a complete refund of the price if you mail the toy(s) back to us within a week.

**NOTE:**
**Please specify the doll/dolls you would like to have by putting a tick-mark against the respective doll/dolls listed in the coupon. Also, write your address in full and specify the mode of payment i.e. whether you are remitting the price of the doll/dolls by Postal-Order or Money-Order. Please make sure that the exact price is paid. This is to avoid any difficulty in processing your orders. Those who have already sent their coupons without being specific on these points should write to us again separately, to enable us to send them the doll/dolls as soon as possible.**




**CUDD**

**ES**

Manufactured in technical collaboration with Sammo Corporation, South Korea.

**Chandamama Toytronix Private Limited,**
Chandamama Buildings,
188, NSK Salai, Vadapalani, Madras - 600 026.

Mudra:M:CT:3789

# चन्दमामा

संस्थापकः– **'चक्रपांणिः'** सञ्चालकः– **'नागिरेड्डी'**

**य**त्र वयं निवसामः तत्र तत्रत्या प्रादेशिकभाषा काचित् भवति एव। तया एव भाषया अस्माभिः आजन्मनः व्यवहारः कृतः। अतः अस्मज्जीवने यदि तस्याः भाषायाः प्राथम्यं स्यात् तर्हि न तत्र चित्रम्।

परिवारपोषणं, धनसम्पादनम्, उन्नतपदप्राप्तिः इत्यादीनि जीवने सहजानि, अपरिहार्याणि च। एतादृशानां सिद्धिः संस्कृततः तु न भवेत्। अतः व्यावहारिके क्षेत्रे अपि संस्कृतस्य न प्राथम्यम्।

एवं च आहत्य चिन्तयामः चेत् 'अस्माकं जीवने संस्कृतस्य प्राथम्यं नास्ति' इति निर्विवादम् अङ्गीकरणीयं भवति।

संस्कृतस्य उन्नतिः अवश्यं स्यात् इति वयं प्रबलं प्रतिपादयामः। मनसा इच्छामः च। किन्तु वैपरीत्यं नाम अस्माकं जीवने एव संस्कृतस्य प्राथम्यं न भवति। एवं तर्हि संस्कृतस्य उन्नत्यर्थं केन प्रयतनीयम्? किम् अन्येन तृतीयेन? तादृशः कः कुत्र अस्ति?

संस्कृतस्य उन्नतेः अधोगतेः वा कारणं वयम् एव संस्कृतज्ञाः। अत्र नास्ति संशयलेशः अपि। अतः अस्माभिः आत्मावलोकनं कुर्वद्भिः संस्कृतोन्नतिविषये पुनश्चिन्तनीयम्। संस्कृतोन्नतिसम्पादने संस्कृतज्ञस्य एकैकस्य अपि उत्तरदायित्वम् अस्ति एव। (न तु केषाञ्चित् एव कार्यकर्तॄणाम्) ततः विमुक्ताः भवितुं न अर्हामः वयं कदापि।

सम्पुटः–६ मार्च–१९९० सञ्चिका–१२

प्रतिकृतिमूल्यं रू. ३-०० * वार्षिकं ग्राहकशुल्कं रू. ३६-००






# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अनुरोधः - | Insistence |
| अपनीय - | Having removed |
| आच्छन्नम् - | Covered |
| आद्यम् - | Foremost |
| आमिषम् - | Bait |
| आयुर्मानम् - | Lifetime |
| औष्ण्यम् - | Heat |
| कर्कटकः - | Crab |
| कासारः - | Tank |
| काष्ठफलकम् - | Wooden plank |
| खलीनम् - | Bridle |
| खुरः - | Hoof |
| गणितम् - | Counted |
| गिलति - | Swallows |
| गुल्मः - | Bush |
| गोपालकः - | Cowherd |
| घृष्टः - | Rubbed |
| चिरनिद्रा - | Eternal sleep(Death) |
| तडित् - | Lightning |
| तृष्णा - | Desire |
| *** | *** |
| धीवरः - | Fisherman |
| नामान्तरम् - | Another name |
| निर्बाधम् - | Withought hinderance |
| निर्मानुषम् - | Desolate |
| पृथुकः - | Beaten rice |
| प्राकारः - | Compound |
| मकरन्दः - | Nectar of flowers |
| मृगमरीचिका - | Mirage |
| यामः - | One-eighth part of a day |
| रुचिः - | Taste |
| वातायनम् - | Window |
| विद्रोहः - | Treachery |
| विरोद्धुम् - | To oppose |
| वेणुनादः - | Sound of flute |
| श्रेयः - | Prosperity |
| समक्षम् - | In the presence of |
| सर्बकारः - | Government |
| सिकताः - | Sand |
| स्फुलिङ्गः - | Spark |
| स्फोटकम् - | Cracker |






# विभाजकभित्तेः पतनम्

चीनादेशीयायाः महाभित्तेः विषयं सर्वे जानन्ति एव। शत्रूणाम् आक्रमणतः देशस्य रक्षणार्थं बहु पूर्वम् एव सा भित्तिः रचिता आसीत्। प्रपञ्चस्तरे सप्तसु आश्चर्यकरेषु विषयेषु एषा अन्यतमत्वेन गण्यते।

एतस्मिन् शतके– तन्नाम १९६१ तमे वत्सरे अन्या महाभित्तिः निर्मिता। एतस्याः निर्माणस्य उद्देशः तु पूर्वोक्तस्य अपेक्षया सर्वथा भिन्नः। स्वस्य देशस्य प्रजाः देशान्तरं यथा न गच्छेयुः तथा कर्तुम् एषा भित्तिः निर्मिता आसीत्।

एषा परिस्थितिः किमर्थम् आगता इति ज्ञातव्यं चेत् अस्माभिः द्वितीय-जागतिक-युद्धकालीनस्य इतिहासस्य पृष्ठानि कानिचन परिशीलनीयानि भवन्ति।

जर्मनीनेता हिट्लर् विश्वम् एव जेतुम् इच्छति स्म। किन्तु तेन १९४४ तमे वर्षे पराजयः प्राप्तः। तस्मिन् सन्दर्भे जर्मनी-देशस्य राजधानी बर्लिन्नगरं द्विधा विभक्तम् अभवत्। पश्चिमबर्लिन् ब्रिटन्-अमेरिका-फ्रान्स्देशानाम् अधीनम् अभवत्। पूर्वबर्लिन् सोवियत्रशियादेशस्य अधीनम् अभवत्। हिट्लरस्य तत्सहचराणां च पराजये एते चत्वारः देशाः प्रमुखं पात्रम् ऊढवन्तः आसन्।

१९५४ तमे वर्षे बर्लिन्देशद्वयम् अपि स्वातन्त्र्यं प्राप्नोत्। पूर्वजर्मन् 'जर्मन् डेमाक्रटिक् रिपब्लिक्' इति, पश्चिमजर्मन् 'जर्मन् फेडरल् रिपब्लिक्' इति च ख्यातम् अभवत्। उभौ अपि देशौ भिन्नं राजनैतिकसिद्धान्तम् आत्मसात्कृतवन्तौ। नाम्ना 'प्रजातान्त्रिकः' (डेमोक्रटिक्) सन् अपि पूर्वजर्मन्देशः कम्यूनिस्ट्देशः जातः। पश्चिमजर्मन् तु प्रजातन्त्रमार्गेण एव अग्रे गतः।

विभिन्नैः कारणैः विभिन्नेषु क्षेत्रेषु पश्चिमजर्मनी पूर्वजर्मनी अपेक्षया अधिकां प्रगतिम् असाधयत्। एतदतिरिच्य तयोः देशयोः महान् स्वरूपभेदः अयम् आसीत् यत् पश्चिमजर्मनीजनाः स्वविचारान् निर्बाधं प्रकटयितुं शक्नुवन्ति स्म चेत् पूर्वजर्मनी-जनाः एतादृशात् स्वातन्त्र्यात् वञ्चिताः आसन्।

कालान्तरे पूर्वबर्लिन्जनाः पश्चिमबर्लिन्

प्रति गन्तुम् आरब्धवन्तः। केचन तत्रैव स्थितवन्तः चापि। तदा पूर्वजर्मनीसर्वकारेण एवं गमनागमनस्य निषेधः कृतः।

जनानां गमनागमनस्य निवारणार्थं सीमाप्रदेशे उन्नता भित्तिः निर्मिता। यदि कश्चित् एतां भित्तिम् अतिक्रम्य गन्तुं प्रयत्नं करोति तर्हि सः पूर्वजर्मन्सैनिकैः मारितः भवति स्म। अतः सामान्याः जनाः एतस्याः भित्तितः जुगुप्सिताः जाताः। ते स्वस्य असन्तोषं व्यक्तं प्रकटितवन्तः अपि। क्रमशः व्यक्तिस्वातन्त्र्यविषये जनानाम् आग्रहः अधिकः जातः। तत्रत्याः जनाः चिन्तयन्ति स्म यत् सदापि एकस्य एव पक्षस्य शासनस्य अपेक्षया अपेक्षितस्य पक्षस्य निर्वाचनस्य व्यवस्था एव श्रेष्ठा इति।

अन्ते इदानीन्तनेन पूर्वजर्मनीसर्वकारेण निश्चितं यत् बर्लिन्जनान् विभजन्त्याः भित्तेः द्वारम् उद्घाटनीयम् इति। एतत् ज्ञात्वा सहस्रशः जनाः नितरां सन्तुष्टाः। केचन तु पूर्वबर्लिन्जनाः विभाजकभित्तेः काश्चन भागान् एव पातितवन्तः।

बर्लिन्भित्तेः पतनं, मानवेषु स्थितायाः स्वातन्त्र्यप्राप्तीच्छायाः विजयं सङ्केतयति इति निश्चयेन वक्तुं शक्नुमः वयम्।





# धीवरस्य कष्टम्

गालवपुरनामके ग्रामे लघुनद्याः पार्श्वे लक्ष्मणः नाम धीवरः निवसति स्म। सः बहोः कालतः पत्नीपुत्रादिभिः तत्रैव लघुकुटीरे निवसति। यत्र तस्य गृहम् अस्ति तत्र नद्याः गभीरता, वैशाल्यं च अधिकम् आसीत्। प्रवाहस्य वेगः अतीव न्यूनः आसीत्। अतः कासारः इव दृश्यमाने तस्मिन् प्रदेशे मीनाः अधिकतया निवसन्ति स्म। जालं प्रसार्य मीनान् गृहीत्वा नगरे विक्रीय प्राप्तेन धनेन कुटुम्बनिर्वहणं कुर्वन् दिनानि यापयति स्म लक्ष्मणः।

कदाचित् उभौ राजभटौ धीवरस्य लक्ष्मणस्य समीपम् आगत्य आज्ञास्वरेण उक्तवन्तौ– "भोः, अस्माकं चन्द्रसेनमहाराजः प्रजानां योगक्षेमं विचारयितु देशे पर्यटनं करोति। एवं पर्यटनं कुर्वन् सः अचिरात् एव अत्रापि आगमिष्यति। तस्य निवासार्थम् एषः प्रदेशः योग्यः अस्ति। नदीतीरे स्थितः घनच्छायायुक्तैः वृक्षैः समेतः एषः प्रदेशः ग्रामाधिकारिणा सूचितः। अतः भवान् एतत्क्षणे एव कुटीरं रिक्तीकृत्य वस्तुभिः सह इतः निर्गच्छतु" इति।

अनन्योपायः लक्ष्मणः वस्तुभिः परिवारेण च सह ततः निर्गत्य अन्यत्र नदीतीरे तात्कालिकीं वसतिं निर्माय स्थितवान्। तत्र नद्याः गभीरता वैशाल्यं च न्यूनम्। प्रवाहस्य वेगः अधिकः। अतः तत्र मीनाः अधिकतया न प्राप्यन्ते लक्ष्मणेन। प्राप्तानां मीनानां विक्रयणेन तु दैनन्दिनभोजनार्थम् आवश्यकं धनम् अपि न प्राप्यते। एवम् एव मासः अतीतः। तथापि लक्ष्मणेन रिक्तीकृते स्थले वासं कर्तुं राजा न आगतः एव।

पूर्वतनम् एव स्थलं प्रति गन्तव्यम् इति लक्ष्मणस्य महती इच्छा। अतः सः कदाचित्

"अनामिका"



पूर्वतनं स्थलं गत्वा तत्रस्थौ राजभटौ विनयेन पृष्टवान्– "महाराजः कदा आगमिष्यति? तस्य आगमनविषये भवद्भ्यां किमपि ज्ञायते वा?" इति।

तदा अन्यतरः भटः कोपेन उक्तवान्– "भोः, महाराजः कदा आगमिष्यति इति ज्ञानेन भवतः किं प्रयोजनम्? यदा आनुकूल्यं तदा आगच्छेत् सः। भवदीयं स्थलं कोऽपि चोरयित्वा न नेष्यति। चिन्तां मा करोतु। महाराजः यदा अत्र आगत्य गमिष्यति तदा प्रत्यागच्छतु भवान्। इदानीं निर्गच्छतु इतः" इति।

पुनः सप्ताहं यावत् प्रतीक्षा कृता लक्ष्मणेन। तथापि महाराजः तु न आगतः। कुटुम्बनिर्वहणकष्टं लक्ष्मणं दिने दिने बाधते। अतः सः निश्चितवान् यत् कदा आगमनम् इति महाराजः एव प्रष्टव्यः इति। ततः साक्षात् राजधानीं गतवान् सः।

दुर्गस्य द्वारे स्थिताः रक्षकभटाः लक्ष्मणम् अवरुध्य उक्तवन्तः– "भोः, महाराजस्य दर्शनं तावत् सुलभं न। आवश्यकं चेत् मन्त्रिवर्यं पश्यतु। घण्टाभ्यन्तरे सः एतेन मार्गेण गच्छति। तावत् प्रतीक्षां कृत्वा यदा सः अत्र आगच्छति तदा कष्टसुखं निवेदयतु" इति।

"मन्त्रिणः समीपे मम किमपि कार्यं नास्ति। कार्यं तु महाराजसमीपे" इति उक्तवान् लक्ष्मणः।

तदा भटाः 'एषः कश्चन ग्रामीणः मूर्खः' इति भावयन्तः हसन्तः तम् उक्तवन्तः– "भोः, अद्य महाराजः प्रासादे नास्ति। श्वः आगच्छतु" इति।

"एवं वा? तर्हि सः मम ग्रामं गतः नद्याः तीरे वसतिं कृतवान् स्यात्" इति सन्तोषेण उक्तवान् लक्ष्मणः।

तदा भटाः कोपेन– 'भोः, कः ग्रामः? का नदी? वयं किमपि न जानीमः। अलं जल्पनेन। निर्गच्छतु इतः" इति तं ततः निवारयितुम् उद्युक्ताः।

प्रासादस्य चन्द्रशालायां स्थितः राजा एतत्सर्वं पश्यन् आसीत्। सः भटं प्रेषयित्वा धीवरं लक्ष्मणं स्वसमीपम् आनायितवान्। तत्समये महाराज्ञी अपि तत्रैव आसीत्।

धीवरः लक्ष्मणः महाराजं विनयेन नमस्कृत्य उक्तवान्– "महाप्रभो! मम ग्रामे नदीतीरे निवासार्थं कदा आगमिष्यति भवान्? तत् ज्ञातुम् एव अहम् अत्र आगतः" इति।

तदा राजा आश्चर्येण– "कः ग्रामः भवतः? कः भवान्? का नदी?" इति पृष्टवान्।

धीवरः लक्ष्मणः आत्मनः नाम, वृत्तिं, राजभटैः कुटीरः रिक्तीकारितः यत् तच्च निवेद्य दैन्येन उक्तवान्– "प्रभो! इदानीं यत्र अहं निवसामि तत्र मीनाः एव न लभ्यन्ते। मीनग्रहणवृत्त्यर्थं पूर्वतनं स्थलम् एव सुयोग्यम्। भवान् यावच्छीघ्रं तत् स्थलं गत्वा, तत्र कानिचन दिनानि स्थित्वा प्रतिगमिष्यति चेत् अहं पुनरपि तत्र गत्वा सुखेन स्थातुं शक्नुयाम्। यावत् भवतः तत्र आगमनं न भवेत् तावत् मम पत्नीपुत्रादीनाम् उपवासः एव शरणम्। अतः यावच्छीघ्रं मम ग्रामम् आगत्य गच्छतु इति प्रार्थयामि। कृपया मम प्रार्थनायाम् उपेक्षा न प्रदर्शनीया" इति।

एतत्सर्वं श्रुत्वा राजा राज्ञीं मन्दहासपूर्वकम् उक्तवान्– "भोः, पश्यतु। देशपर्यटनेन न केवलं लाभः, हानिः अपि अस्ति इति इदानीं ज्ञातम्" इति।

"सत्यम् एव एतत्। प्रजानां दुःखम् अस्माकं दुःखम्। इतः परम् एतादृशी घटना अस्माकं राज्ये न भवेत्" इति अनुतापेन उक्तवती राज्ञी।

"एतस्य सरलतां, साक्षात् मम समीपे आगतं यत् तत् धैर्यं च दृष्ट्वा अहं सन्तुष्टः अस्मि। अतः एतस्मै पारितोषिकं दास्यामि" इति उक्त्वा राजा कोषाधिकारिणम् आहूय तद्द्वारा शतं सुवर्णनाणकानि दापितवान्।

अनन्तरं सः धीवरम् उक्तवान्– "भवता सह एकं भटं प्रेषयिष्यामि। पूर्वतने स्थले भवतः वासार्थम् इतः परं कोऽपि विघ्नं न आचरिष्यति। गत्वा पत्नीपुत्रादिभिः सह निश्चिन्ततया निवसतु भवान्" इति।

आत्मनः इच्छा पूर्णा इति धीवरः महान्तं सन्तोषम् अनुभूतवान्।





# संन्यासिनः शापः

बलाहकपुरे वीरेन्द्रः नाम कश्चन युवकः आसीत्। सः सुन्दरः दृढकायः। काष्ठानि सङ्गृह्य विक्रीय प्राप्तेन धनेन सः जीवनं यापयति स्म। कदाचित् सः अरण्ये वृक्षशाखां छेदयन् आसीत्। तदा अकस्मात् सा शाखा मार्गे गच्छतः संन्यासिनः उपरि पतिता। तदा कुपितः संन्यासी– "अये दुष्ट! मदोन्मत्तः भवान् आगच्छतः मम उपरि शाखां पातयन् मां व्रणितं कृतवान्। अतः एतस्मिन् एव क्षणे राक्षसरूपं प्राप्नोतु भवान्" इति शापं दत्तवान्।

वीरेन्द्रः तत्क्षणे एव राक्षसरूपं प्राप्तवान्। सः भीत्या कम्पमानः संन्यासिनं साष्टाङ्गं नमस्कृत्य दैन्येन प्रार्थितवान्– "श्रीमन्! मया बुद्ध्या एतत् न कृतम्। अनवधानतः एतत् सम्पन्नम्। एतदर्थम् एतावान् घोरः शापः दत्तः खलु? व्रणाः सद्यः एव उपशान्ताः भवेयुः एव। अतः शापम् उपसंहरतु कृपया" इति।

तदा संन्यासी किञ्चिदिव शान्तः सन्– "दत्तं शापम् उपसंहर्तुं न शक्यम्। किन्तु ततः विमोचनं प्राप्तुम् एकम् उपायं सूचयिष्यामि। एतेन राक्षसरूपेण अटन्तं भवन्तं दृष्ट्वा यदा काचित् स्वयं भवन्तं परिणेतुं सिद्धा भविष्यति तदा भवान् पूर्वतनं रूपं प्राप्स्यति" इति उक्त्वा ततः निर्गतवान्। वीरेन्द्रः तु राक्षसवेषेण अटव्यां सञ्चरन् शापविमोचनस्य अवकाशं प्रतीक्षमाणः आसीत्।

कदाचित् सुगुणमाला नाम काचित् भूस्वामिपुत्री शिबिकायाम् उपविश्य अरण्यमार्गेण मातुलगृहं प्रति गच्छन्ती आसीत्। एवं गमनसमये अकस्मात् केचन चोराः तेषाम् उपरि आक्रमणं कृतवन्तः।



रक्षणार्थं स्थिताः सेवकाः चोराणाम् आक्रमणं धैर्येण सम्मुखीकृतवन्तः। किन्तु चोराणां बलम् अधिकम् आसीत्। अतः भूस्वामि-सेवकाः पराजयं प्राप्य पलायितवन्तः।

चोरनायकः शिबिकायां स्थितां सुन्दरीं तरुणीं सुगुणमालां दृष्ट्वा आकृष्टः अभवत्। तां परिणेतुम् इच्छन् सः पर्वतगुहायां स्थितां स्वस्य वसतिं प्रति नीतवान्। वीरेन्द्रः रहसि तिष्ठन् एतत्सर्वं पश्यन् रहस्यरूपेण चोरगणम् अनुसृत्य गत्वा समीपस्थायाम् अपरस्यां गुहायां निलीय स्थितवान्।

चोरनायकः सुगुणमालायाः नामकुलादिकं पृष्ट्वा ज्ञात्वा उक्तवान्– "अहं भवतीं परिणेतुम् इच्छन् अत्र आनीतवान् अस्मि। भवत्याः पितुः यावत् ऐश्वर्यं, ततोऽप्यधिकम् ऐश्वर्यम् अस्ति मम। पार्श्वस्थायां गुहायां सुवर्ण-रजतादीनि राशीकृतानि सन्ति। भवती स्वयं पश्यतु। राज्ञः समीपे अपि एतावत् ऐश्वर्यं भवितुं नार्हति" इति।

"ऐश्वर्यं यावत् वा भवतु नाम, भवान् तु प्रवृत्त्या चोरः। यदि भवति सौजन्यं स्यात् तर्हि इतः गच्छतु। अहम् अपि मम मार्गम् अनुसरामि" इति उक्तवती सुगुणमाला।

'केषाञ्चित् दिनानाम् अनन्तरं वा एतया मम परिणयः अङ्गीकरणीयः एव' इति आलोच्य चोरनायकः ततः गतवान्।

चोरनायकस्य निर्गमनस्य अनन्तरं सुगुणमाला यावत् ततः निर्गन्तुम् उद्युक्ता तावता वीरेन्द्रः तत्र आगत्य– "अये सुगुणमाले, मम राक्षसरूपं दृष्ट्वा भीता मा भवतु। भवतीं सकुशलं गृहं प्रापयामि। मया सह आगच्छतु तावत्" इति उक्तवान्।

सुगुणमाला भयं परित्यज्य आश्चर्येण तं पृष्टवती– "अहं का इति कथं जानाति भवान्?" इति।

"भवतीं, भवत्याः कुलं, पितरं च अहं सम्यक् जानामि। वार्तालापार्थम् न अयं समयः। भवतीम् एकाकिनीं गन्तुं न त्यजन्ति चोराः। मया सह आगच्छतु तावत्" इति उक्त्वा ततः प्रस्थितवान् वीरेन्द्रः। सुगुणमाला तम् अनुसृतवती।

तौ किञ्चिद्दूरं गतवन्तौ। तावता

चोरनायकः अनुचरैः सह तयोः सम्मुखम् आगत्य– "अये सुन्दरि! एषः भीरुः राक्षसः भवतीं कथं वा रक्षेत्! अद्यावधि एतेन एकः अपि प्राणी न मारितः, भक्षितः वा। एतम् अहं सम्यक् जानामि। सर्वथा भीरुः एषः। एतम् इदानीं यमसदनं प्रेषयिष्यामि" इति उक्त्वा हस्तेन खड्गम् उन्नीतवान्।

तावता वीरेन्द्रः झटिति उत्प्लुत्य चोरनायकस्य हस्तं दृढं गृहीत्वा तस्य हस्तात् खड्गम् आकृष्य तेन चोरनायकस्य उरसि प्रहारं दत्तवान्। रक्तसिक्तं खड्गं हस्तेन इतस्ततः चालयन् चोरानुचराणां समीपं धावितवान्। वीरेन्द्रस्य उग्रं रूपं दृष्ट्वा भीताः ते चोराः आक्रन्दनं कुर्वन्तः ततः पलायितवन्तः।

एतेन सुगुणमाला पुनरपि आश्चर्यं प्रकटयन्ती वीरेन्द्रं दृष्ट्वा– "राक्षसात् सर्वे भीताः भवन्ति। किन्तु चोरनायकः तु भवतः उपहासं कुर्वन् भवतः उपरि आक्रमणार्थम् अपि उद्युक्तः। भवतः पूर्ववृत्तान्तं सर्वं जानामि अहम् इत्यपि उक्तवान् सः। किम् एतत्?" इति पृष्टवती।

"स्यात् नाम। मम पूर्ववृत्तान्तं जानीयात् सः" इति वदन् वीरेन्द्रः चिन्तया शिरः अवनमय्य स्थितवान्।

तदा सुगुणमाला– "भवान् राक्षसरूपेण स्थितः चेदपि मानवेषु अविद्यमानाः अपूर्वाः गुणाः भवति सन्ति। यदि भवतः विरोधः न स्यात् तर्हि अहं भवन्तम् एव परिणेतुम् इच्छामि। भवादृशः गुणवान् मानवेषु न स्यात् एव" इति उक्तवती।

तस्मिन् एव क्षणे वीरेन्द्रः नैजरूपेण स्थितवान्। एतत् दृष्ट्वा आश्चर्येण पृष्टवती सुगुणमाला– "भवान् वस्तुतः अपि राक्षसः न वा?" इति।

तदा वीरेन्द्रः पूर्वं प्रवृत्तं सर्वं निवेदितवान्। अनन्तरं तया सह भूस्वामिनः गृहं गतवान्। भूस्वामी पुत्र्याः मुखात् सर्वं वृत्तान्तं श्रुतवान्। पुत्री सुगुणमाला वीरेन्द्रे अनुरक्ता अस्ति इति ज्ञात्वा तयोः विवाहं सवैभवं निर्वर्तितवान्।






## ५

(सुमेधराज्यस्य राजकुटुम्बस्य नाशार्थं, सिंहासनस्य स्वायत्तीकरणार्थं च सेनापतिः वीरसिंहः तन्त्रं रचितवान्। एतत् कथमपि किञ्चित्पूर्वं जानन् राजा शान्तिदेवः सुरङ्गमार्गेण राज्ञीं पुत्रं च प्रेषितवान्। ततः अरण्यं प्राप्तवती राज्ञी जयानन्दमुनेः वशे पुत्रं समर्प्य चिरनिद्रां गतवती। शान्तिदेवः तु युद्धं कुर्वन् अन्ते नद्याम् आत्मानं पातितवान्। तदनन्तरम्........)

राजप्रासादस्य अन्तः प्रचलत् घोरतरं युद्धं, बहिः उत्सवाचरणस्य वैभवस्य विनोददृश्यानां च दर्शने लीनैः जनैः किञ्चिदपि न ज्ञातम् एव।

स्फोटकानां स्फोटनकार्यक्रमे केचन आसक्ताः चेत् अन्ये केचन विनोदजनकेषु कार्यक्रमेषु आसक्ताः। अपरे केचन मल्लयुद्धादीनि द्रष्टुम् उत्सुकाः। इतरे केचन दीपालङ्कारादिकं पश्यन्तः मार्गे इतस्ततः अटन्ति स्म। एवं सर्वे स्वरुच्यनुगुणं व्यवहरन्तः आसन्। अतः राजकुटुम्बेन प्राप्तः अपायः केनापि न लक्षितः एव।

रात्रेः तृतीयः यामः अपि समाप्तः। कार्यक्रमाः सर्वे समाप्तप्रायाः। अतः जनाः अपि क्रमशः ततः समूहरूपेण निर्गन्तुम् आरब्धवन्तः।



राजा। अधिकारपरिवर्तनसम्बन्धे केनापि किमपि न प्रष्टव्यं, परस्परं वार्तालापः न करणीयः वा। एषा राजाज्ञा। अतः भवन्तः मौनं स्वस्वकर्मणि निरताः भवन्तु'' इति आज्ञापितवान्।

सर्वे कर्मकराः शिरः अवनमय्य मौनेन स्वकार्यार्थं गतवन्तः।

प्रातःकालाभ्यन्तरे अधिकारपरिवर्तनवार्ता समग्रे देशे सडिण्डिमघोषं प्रसारिता। डिण्डिमघोषकयोः भटयोः रक्षणार्थम् इव ताभ्यां सह केचन आयुधधारिणः भटाः अपि आसन्। 'यः अधिकारपरिवर्तनं विरुध्य किमपि वदति करोति वा, तस्य शिरः कर्तितं भविष्यति' इति वदन्तः आसन् ते भटाः। अतः प्रजासु भीतिः कुतूहलं च। वीरसिंहशासनम् अङ्गीकर्तुं न सिद्धाः ते। किन्तु विरोद्धुम् अपि तेषां सामर्थ्यं नास्ति। अतः हृदये वेदनाम् अनुभवन्ति ते।

प्रतिग्रामे राजपरिवर्तनवार्ता श्राविता। कुत्रचित् कश्चन वृद्धः– ''सन्तोषमये समये कीदृशी दुर्वार्ता एषा! अहो अशनिपातः! अहो विधेः दुर्व्यवहारः!' इति दुःखेन उक्तवान्।

तावता द्वौ भटौ अग्रे आगत्य तं वृद्धं बलात् आकृष्य कुत्रापि नीतवन्तौ।

नगरे अपि एतादृशी एव स्थितिः। जनाः आश्चर्येण भीत्या, कूतूहलेन च डिण्डिमघोषकं परितः स्थित्वा वार्तां शृण्वन्ति। वार्तां श्रुत्वा कम्पन्ते ते। सशब्दं

एवं गच्छन्तः ते कार्यक्रमाणां वैभवं पुनः पुनः स्मरन्तः राजकुमारः चिरं जीवतु इति वदन्ति स्म। नटनर्तकादयः अलङ्कारं, वेषादिकं च अपनीय ततः गमनार्थं वस्तूनि ग्रन्थिरूपेण बध्नन्तः आसन्।

उषःकाले एव प्रासादस्य उच्चाधिकारी अधिकारवाण्या आज्ञापितवान् यत् सर्वे कर्मकराः एकत्र सम्मिलेयुः इति।

यदा सर्वे सम्मिलिताः तदा सः अधिकारी वेदिकाम् आरुह्य– ''एतस्य राज्यस्य पूर्णः अधिकारः राज्ञः शान्तिदेवस्य हस्तात् सेनापतेः वीरसिंहस्य हस्तम् आगतः अस्ति। कथम् एवम् अभवत् इति प्रष्टुं कोऽपि न अर्हति। अद्य आरभ्य वीरसिंहः अस्माकं

श्वासोच्छ्वासं कर्तुम् अपि धैर्यं नास्ति तेषाम्।

कुत्रचित् कश्चनं युवकः जनसमूहात् अग्रे आगत्य धैर्येण पृष्टवान्– "महाराजः स्वबुद्ध्या अधिकारं दत्तवान् वा? महाराजः, महाराज्ञी, युवराजः च कुत्र सन्ति इदानीम्?" इति।

"अप्रष्टव्याः प्रश्नाः एते" इति अधिकारवाण्या तं युवकम् उक्तवान् डिण्डिमवादकः।

"राज्ञः शान्तिदेवस्य शासने वयं तृप्त्वा जीवन्तः आस्म। तादृशस्य महाराजस्य सम्बन्धी प्रश्नः एषः। अतः अहं पृच्छामि। ग्रामस्य प्रतिनिधिः सन् पृच्छन् अस्मि" इति उक्तवान् सः धैर्यशाली युवकः।

"तर्हि अस्माभिः सह आगच्छतु। सर्वं ज्ञायते" इति उक्तवान् डिण्डिमवादकः।

"मया किमर्थम् आगन्तव्यम्? राज्याधिकारस्य परिवर्तनं यथा डिण्डिमघोषद्वारा ज्ञातं, तथैव तस्य कारणम् अपि डिण्डिमघोषद्वारा ज्ञायेत" इति उक्तवान् सः युवकः।

डिण्डिमवादकः एतस्य उत्तरं किमपि न उक्तवान्। हस्तम् उन्नीय अनुचरान् किमपि उक्तवान्।

तावता चत्वारः सैनिकाः झटिति अग्रे आगत्य विरोधम् अपि अविगणय्य तं युवकं बलात् आकृष्य नीतवन्तः। युवकः तेषां



ग्रहणतः आत्मनः विमोचनं प्राप्तुं बहुधा प्रयत्नं कृतवान्। तथापि सः असफलः एव।

एतया घटनया प्रजाभिः ज्ञातं यत् सिंहासनं दुष्टैः एव आक्रान्तम् अस्ति इति। राज्ञः, तत्परिवारस्य च का गतिः जाता स्यात् इति सर्वे चिन्ताक्रान्ताः जाताः। किन्तु कः वा वस्तुस्थितिं वदेत्? दण्डभीत्या जनाः राजकुटुम्बविषये व्यक्तं वार्तालापम् अपि न कुर्वन्ति। अतः समग्रे देशे श्मशानमौनं शोकच्छाया च व्याप्ता अस्ति।

शान्तिपुरे प्रवृत्ता एषा विद्रोहवार्ता राज्ञयाः पित्रा अमृतपुरीराजेन अपि श्रुता। अमृतपुरीसैन्यबलं तु अत्यल्पम्। सुमेधराज्यस्य उपरि आक्रमणं कर्तुं तत्



सर्वथा अपर्याप्तम्। अतः राज्ञ्याः पिता किङ्कर्तव्यतामूढः सन् मौनम् अश्रूणि स्रावयति।

सेनापतिः वीरसिंहः अनन्तरदिने राजपुरोहितम् आहूय आज्ञापितवान् यत् अहं सिंहासने अभिषेक्तव्यः इति।

तदा राजपुरोहितः उक्तवान्– "अस्माकं सम्प्रदायः अस्ति यत् यदा राजा स्वयं विश्रान्तिम् इच्छति, मृतः भवति वा तदा एव नूतनः सिंहासने उपवेशनीयः इति। अन्यच्च राजकुटुम्बस्य अनुज्ञानुसारम् एव नूतनस्य पट्टाभिषेकः भवेत्। अतः राज्ञः शान्तिदेवस्य अनुज्ञां विना राजपुरोहितः अहं भवतः शिरसि राजमुकुटं स्थापयितुं न शक्नोमि" इति।

वीरसिंहः राजपुरोहितं तीक्ष्णया दृष्ट्या पश्यन् हुंकृतवान्। एतस्य तात्पर्यं जानन्तः भटाः राजपुरोहितं बलात् बद्ध्वा नीत्वा कारागारे स्थापितवन्तः।

झटिति अन्यः कश्चन पुरोहितः आनीतः। भीत्या कम्पमानः सः नूतनः पुरोहितः वीरसिंहस्य पट्टाभिषेकं निर्वर्तितवान्। एवं त्वरया पट्टाभिषेककार्यक्रमः सम्पन्नः।

शान्तिदेवस्य आप्ताः अभिमानिनः च ये आसन् ते सर्वे आस्थानपदवीतः निष्कासिताः। तत्तत्स्थाने विश्वासपात्राणि जनान् एव नियोजितवान् वीरसिंहः।

वीरसिंहस्य पट्टाभिषेकस्य अनन्तरं राजसभा प्रवृत्ता। सभायाः आरम्भे वीरसिंहः वृद्धं मन्त्रिणम् उक्तवान्– "मन्त्रिवर्य! 'वीरभोग्या वसुन्धरा' इति वचनं भवता श्रुतम् एव स्यात्। बहोः कालतः सुमेधराज्यसैन्येन विजययात्रा एव न कृता। सैनिकाः अलसाः जायमानाः सन्ति। युद्धार्थं तेषां बाहवः स्फुरन्ति। पराक्रमणेन प्राप्यमाणम् आनन्दम् अनुभोक्तुं यः न इच्छति सः वस्तुतः राजा भवितुं न अर्हति। अतः इदमिदानीं सिंहासनम् आरूढवतः मम प्रथमा विजययात्रा कस्यां दिशि भवतु, कं देशम् उद्दिश्य भवतु इति अनुभविना भवता सूचनीयम्। प्रधानामात्यः सर्वदाऽपि राज्ञः मार्गदर्शकः" इति।

तदा वृद्धः मन्त्री उत्थाय परितः एकवारं



विलोक्य– "सेनापते! इदानीं ...." इति यावत् वचनम् आरब्धवान् तावता वीरसिंहः उत्थाय गर्जितवान्– "मम सिंहासनारोहणं जानन् अपि मां 'सेनापते' इति सम्बोधयति खलु? निष्कण्टकस्य सुमेधराज्यस्य सिंहासनम् आरूढवान् अस्मि इति प्रथमं स्मरतु। शान्तिपुरं मम राजधानी। उचितस्य गौरवस्य प्रदर्शनं भवतः एव श्रेयसे भवेत्। स्मरतु" इति। एवं वदन् युद्धे जातं कर्णच्छेदनं जनाः यथा न जानीयुः तथा कर्तुं किरीटं सम्यक् धृतवान्।

"क्षन्तव्यः अहम्। पूर्वाभ्यासबलात् तथा सम्बोधनं कृतवान्, न तु बुद्ध्या। अन्यस्य देशस्य आक्रमणस्य अपेक्षया अपि अस्माकं देशस्य अन्तः स्थितानां प्रजानां हितार्थं चिन्तनं युक्तम् इति मम आशयः। प्रजानां हितचिन्तनं राज्ञः आद्यं कर्तव्यम्" इति उक्तवान् वृद्धः मन्त्री।

"मम कर्तव्यं किमिति भवतः ज्ञातव्यं नास्ति। कर्तव्याकर्तव्यस्य निर्णेता अहम् एव। मम निर्णयस्य अनुगुणं कार्यं कथं साधनीयम् इति चिन्तनं भवतः कार्यम्। एतत् स्मरतु। 'महाप्रभो' इति सम्बोध्य एव वचनम् आरम्भणीयम् इत्यपि स्मरतु" इति कठोरस्वरेण उक्तवान् वीरसिंहः।

"यथाज्ञापयति महाप्रभो! अहं वृद्धः सञ्जातः। पूर्वतनम् अभ्यासं परिवर्तयितुं प्रायः न शक्नोमि। विजययात्रार्थम् अपि सामर्थ्यं नास्ति मम। अतः अन्यः कश्चित् समर्थः मन्त्रिस्थाने योजनीयः। विश्रान्त्यर्थं गमनार्थम् अनुमतिदानेन अहम् अनुग्रहणीयः च" इति प्रार्थितवान् वृद्धः मन्त्री।

"महामन्त्रिन्! अहम् इच्छामि चेत् चिरकालिकविश्रान्तिम् एव दातुं शक्नोमि" इति अट्टहासपूर्वकम् उक्तवान् वीरसिंहः।

मन्त्री प्रत्युत्तरं किमपि अवदन् मौनम् आसने उपविष्टवान्।

"एतत्क्षणतः एव भवान् मन्त्रिपदवीतः निष्कासितः अस्ति" इति आज्ञास्वरेण उक्तवान् वीरसिंहः।

वृद्धः मन्त्री झटिति उत्थाय सभां नमस्कृत्य ततः निर्गतवान्। निर्गच्छन्तं मन्त्रिणं दृष्ट्वा वीरसिंहः उपहासपूर्वकं

हसितवान्।

तम् अनुसरन्तः तत्र उपस्थिताः सर्वे हसितवन्तः। यतः तत्र उपस्थिताः सर्वे वीरसिंहपक्षीयाः एव। तेषां हासेन सभाभवनं प्रतिध्वनितम् अभवत्।

वृद्धः मन्त्री सायङ्काले यथापूर्वं नगरसीमायां स्थितं शिवालयं गत्वा देवदर्शनं कृत्वा प्रत्यागच्छन् आसीत्। तावता अन्धकारः सर्वत्र प्रसरन् आसीत्। मार्गस्य पार्श्वे उन्नताः वृक्षाः गुल्माः च आसन्। जनसञ्चारः तत्र न आसीत्।

कस्यचित् गुल्मस्य पृष्ठतः स्थिताः त्रयः भटाः अकस्मात् अग्रे उत्प्लुतवन्तः। एकः मन्त्रिणः हस्तौ गृहीतवान्। अपरः, मन्त्री यथा आक्रोशनं न कुर्यात् तथा मुखस्य पिधानं कृतवान्। तौ तृतीयस्य आदेशानुगुणं मन्त्रिणं निर्मानुषं प्रदेशं नीतवन्तौ।

तेषां ग्रहणतः विमोचनं प्राप्तुं सामर्थ्यं नास्ति मन्त्रिणः। अतः सः दैवं स्मरन् मौनं स्थितः आसीत्। सः तृतीयः विकटाट्टहासं कुर्वन् कोषात् खड्गम् आकृष्य मन्त्रिणः उपरि प्रयोक्तुम् उद्युक्तः।

किन्तु तावता तस्य खड्गः अन्येन पातितः अनतिदूरे शिलायाः उपरि पतितः। सः 'हा' इति वदन् परिवृत्य दृष्टवान्। अन्यौ भटौ अपि परीक्षादृष्ट्या सर्वत्र दृष्टवन्तौ। किन्तु अत्रान्तरे कस्यचित् अज्ञातपुरुषस्य खड्गप्रहारेण तेषां त्रयाणाम् अपि शिरः अधः अपतत्।

एवं विद्युद्वेगेन कार्यं समाप्य सः अज्ञातपुरुषः खड्गं कोषे स्थापयन् मन्त्रिणम् उक्तवान्– "आर्य, भीतिः मास्तु। एतेषां मरणं श्वः प्रातःकालपर्यन्तं केनापि न ज्ञायते। तदभ्यन्तरे भवान् इतः प्रस्थाय अमृतपुरीं प्राप्नोतु" इति।

"भवान् ...." इति मन्त्री कृतज्ञतापूर्वकं यावत् किमपि वक्तुम् उद्युक्तः तावता सः– "किमपि मा वदतु कृपया" इति वदन् अन्धकारे कुत्रापि लीनः अभवत्।

– (अनुवर्तते)





# विभज्य स्वीकारः

भवभूतिः महाधनिकः चेदपि सर्वथा कृपणः। ग्रामीणः कोऽपि सार्वजनिककार्यार्थं स्वसमीपम् आगतःचेत् भवभूतिः तं वदति– "सार्वजनिककार्यार्थम् अहं धनं दातुम् उद्युक्तः भवामि चेत् कालान्तरे निर्धनः भवेयम्। शालानिर्माणं, देवस्थानस्य पुनर्निर्माणं, मार्गसमीकरणं, कूपखननम् इत्यादिकं सर्वकारेण करणीयम्। भवन्तः मौनं सन्ति इत्यतः शासनम् अपि तटस्थम् अस्ति। अतः अधिकारी साग्रहं निवेदनीयः। एतादृशकार्यार्थं मां वृथा मा पीडयन्तु" इति।

भवभूतेः पत्नी महालक्ष्मीः। तस्यै पत्युः व्यवहारः न रोचते। किन्तु किमपि कर्तुम् अशक्नुवती सा मौनं तिष्ठति।

भवभूतेः गृहस्य पार्श्वे रामनारायणः नाम कश्चन कृषिकः निवसति। सः कुतश्चित् एकम् अपूर्वम् आम्रसस्यम् आनीय गृहस्य पृष्ठतः आरोपितवान् आसीत्। गच्छता कालेन सः आम्रवृक्षः फलितः। 'आम्रवृक्षस्य फलम् अपूर्वम् अस्ति' इति ग्रामीणाः सर्वे वदन्ति स्म।

भवभूतिः प्रतिदिनम् अपि प्रतिवेशिगृहस्य पृष्ठतः स्थितं फलैः पूर्णम् आम्रवृक्षं पश्यति। आम्रफलस्य दर्शनेन तस्य मनसि खादनेच्छा उत्पद्यते। 'रामनारायणः कानिचन फलानि वा मह्यं प्रेषयेत्' इति प्रतीक्षते भवभूतिः। किन्तु रामनारायणः एकं फलम् अपि भवभूतिगृहं प्रति न प्रेषितवान्।

कदाचित् भवभूतेः पुत्रः त्रयोदशवर्षीयः गुरुनाथः सायङ्कालसमये भित्तिम् उल्लङ्घ्य आम्रवृक्षम् आरुह्य कानिचन आम्रफलानि स्वीकृत्य प्रत्यागतवान्। महालक्ष्मीः एतत् दृष्टवती।

सा असमाधानेन पुत्रं तर्जितवती–

"किमिदम् अकार्यम्? चौर्यं पापकरम् इति न जानाति वा भवान्?" इति।

तदा गुरुनाथः आत्मानं समर्थयन् उक्तवान्– "अम्ब! मया किमपि अकार्यं न कृतम्। अपूर्वाणि आम्रफलानि रामनारायणस्य गृहे प्रभूतं फलितानि। प्रतिवेशी सन् अपि सः एकम् अपि फलम् अस्मभ्यं न दत्तवान्। तानि फलानि खादनीयानि इति पितुः अपि महती इच्छा अस्ति एव। एतत् भवती न जानीयात् कदाचित्। किन्तु अहं सम्यक् जानामि" इति।

पार्श्वप्रकोष्ठे स्थितः भवभूतिः पुत्रस्य उत्तरं श्रुत्वा नितरां सन्तुष्टः। किन्तु महालक्ष्मीः असमाधानेन पुनः उक्तवती– "प्रतिवेशिनः रामनारायणस्य गृहे प्रभूतं फलानि सन्ति, तानि खादनीयानि इति भवतः पितुः महती इच्छा अस्ति इति अहं जानामि। स्वसमीपे यत् भवति तत् अन्येभ्यः अदत्त्वा यः खादति सः कृपणः, स्वार्थी च इत्यपि अहं जानामि" इति।

"तर्हि कृपणस्य गृहात् फलानि आनयन्तं मां किमर्थं भवती दूषयति?" इति पृष्ठवान् गुरुनाथः।

"भवान् रामनारायणं कृपणं भावयति खलु? स्वपितुः व्यवहारः कथम् अस्ति इति परिशीलितवान् वा? अस्माकं ग्रामे विद्यालयः, धर्मशाला वा अस्ति वा? समीचीना जलव्यवस्था अस्ति वा? सौभाग्यवशात् अस्माकं प्रभूतं धनम् अस्ति। तथापि पिता सार्वजनिककार्यार्थं साहाय्यं



करोति वा? न खलु? यथा वयम् आचरामः तथा रामनारायणः आचरति चेत् अत्र को दोषः?" इति उक्तवती महालक्ष्मीः।

तावता भवभूतिः प्रकोष्ठात् बहिः आगत्य पत्नीम् उक्तवान्– "स तु बालकः। खादनेच्छया सः कानिचन फलानि आनीतवान् स्यात्। एतत् चौर्यम् इति न भावनीयम्। एतस्य निन्दनम् अपि न उचितम्" इति।

तदा महालक्ष्मीः मन्दहासपूर्वकं पृष्टवती– "अनीतिमार्गेण अन्यस्य वस्तुनः उपरि हस्तप्रसारः किं चौर्यम् इति न भाव्यते? तर्हि अस्माकं समीपे स्थितं धनं कश्चित् कदाचित् चोरयति चेत् किं तेन भवान् खिन्नः क्रुद्धः च न भवति?" इति।

तदा विवेकं प्राप्य मन्दस्वरेण भवभूतिः लज्जया उक्तवान्– "आम्। गुरुनाथः आम्रफलानि यत् चोरितवान् तत् तु अपराधाय एव" इति।

"एतावत्पर्यन्तं तेन कृतम् अनुचितं न इति वदन् आसीत् भवान्। झटिति कथम् अभिप्राये परिवर्तनम् अभवत्?" इति पृष्टवती महालक्ष्मीः।

"भवती लोकज्ञानस्य आधारेण यत् उक्तवती तत् एव कारणम्। भवत्याः कथनतः पुत्रे गुरुनाथे कीदृशं परिवर्तनम् आगतम् इति न जानामि। ततः मयि तु निश्चयेन परिवर्तनम् आगतम्। तस्य फलं कीदृशम् इति श्वः आरभ्य ज्ञास्यति भवती" इति उक्तवान् भवभूतिः।

अनन्तरदिने भवभूतिः ग्रामप्रमुखम् आहूय सार्वजनिककार्यार्थं यथाशक्ति धनं दत्तवान्।

भवभूतौ यत् परिवर्तनम् आगतं तत् दृष्ट्वा ग्रामीणाः सर्वे सन्तुष्टाः। रामनारायणः तु स्वगृहे वर्धितानि आम्रफलानि नीत्वा भवभूतये दत्त्वा– "मित्र! प्रतिवेशिषु ग्रामीणेषु च सदापि मैत्री भवेत्। स्वसमीपे यत् भवति तत् विभज्य स्वीकरणीयम् इति अंशः मया विस्मृतः आसीत्" इति उक्तवान्।

तस्य वचनं श्रुत्वा भवभूतिः महालक्ष्मीः च मन्दहासं प्रकटितवन्तौ।






# दिव्यशक्तिपरिक्षा

'कथाकथने यत् कौशलम् अस्ति तत् प्रदर्श्य राज्ञः हृदयं वशीकृत्य तदीयस्य आस्थानस्य कथाकारः भविष्यामि' इति आलोचयन्तम् इव स्थितं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! राज्ञः भवतः कीदृशी कीर्तिः अस्ति इति अहं न जानामि। राज्ञः धैर्यं, पराक्रमः, बुद्धिमत्ता च अवश्यं भवेत्। तथैव सूक्ष्मा विवेचनशक्तिः मनःस्थैर्यं चापि भवेत् तस्य। मम प्रश्नः- भवतः तादृशी विवेचनशक्तिः अस्ति वा? इति। तस्याः अभावे तु माधवसेनेन इव भवता अपि आत्मना कृतस्य कार्यस्य निमित्तम् आत्मा एव दण्डनीयः भवेत्। माधवसेनः कः, तेन किं कृतम् इति ज्ञातव्यं खलु भवता, येन

## वेतालकथा



आत्मावलोकनार्थं भवतः साहाय्यं स्यात्? अतः माधवसेनस्य कथां श्रावयामि। श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा—

पूर्वं माधवसेनः नाम राजा कोसलदेशं परिपालयन् आसीत्। सः प्रजाः पुत्रान् इव पालयति। सः सदापि प्रजानां योगक्षेमविषये एव चिन्तयन् भवति।

कदाचित् अग्निमित्रः नाम मान्त्रिकः कोसलदेशम् आगतवान्। सः स्वस्य क्षुद्राः विद्याः प्रदर्श्य जनेषु भयम् उत्पादयन् धनं सङ्गृह्णाति स्म। एवं जनान् बहुधा भाययन् सः धनं सम्पाद्य विशालं भवनं निर्मितवान्। तत्र सुखेन निवसन् दिनानि यापयति स्म। जनेषु भीतिजननं तु अनुवर्तते एव। तं दृष्ट्वा सर्वे जनाः नितरां भीताः भवन्ति स्म। अतः कोऽपि एतस्य विषये राजानं रक्षकभटान् वा आक्षेपं न वदति। कष्टम् अनुभवन्तः अपि जनाः कथमपि सहमानाः मौनं तिष्ठन्ति स्म।

किन्तु गुप्तचराणां द्वारा अग्निमित्रस्य सर्वान् व्यवहारान् राजा ज्ञातवान् एव। सः भटान् आज्ञापितवान् यत् अग्निमित्रः मम समीपम् आनेतव्यः इति।

महाराजस्य माधवसेनस्य समीपम् आगतः अग्निमित्रः विनयेन नमस्कृत्य उक्तवान्— "भवतः शासनेन देशे सर्वाः प्रजाः सुखेन सन्ति। सद्यः एव अत्र आगतः अहम् अपि सुखेन अस्मि। भवतः शासनम् अभिनन्दनार्हम्। इदानीं मया किं करणीयम् इति आज्ञापयतु तावत्" इति।

तदा माधवसेनः शान्तेन एव स्वरेण उक्तवान्— "भवतः विनयेन अहं सन्तुष्टः अस्मि। भवान् यदि मम राज्यात् निर्गच्छेत् तर्हि इतोऽपि सन्तुष्टः भवेयम्" इति।

"मादृशः महामान्त्रिकः यस्मिन् देशे भवति तस्य देशस्य गौरवं वर्धते। एवं स्थिते मां राज्यात् निर्गन्तुं किमर्थम् आदिशति? मया कः अपराधः कृतः? योग्यं कारणं न उक्तं चेत् अहम् इतः न निर्गच्छामि" इति उक्तवान् अग्निमित्रः।

"भवता कः अपराधः कृतः इति? भवान् परमस्वार्थी। दुष्टशक्तीनां साहाय्येन जनान् पीडयन् भाययन् च धनं सम्पाद्य सुखम्

अनुभवन् अस्ति। प्रजापीडकः भवान्'' इति उक्तवान् माधवसेनः।

एतत् श्रुत्वा अग्निमित्रः उच्चैः हसन्– ''शक्तिशाली शक्तिहीनानाम् अपेक्षया अपि अधिकं सुखम् अनुभवति इति तु लोकसिद्धः विषयः। प्रबलः मीनः दुर्बलं मीनं गिलति। भवता यः करः विधीयते स च प्रजाभिः सन्तोषेण दीयमानः अस्ति इति भावयति वा भवान्? भवतः शासनं सर्वेषां प्रियम् इति भवतः अभिप्रायः वा? मां दुष्टं वदति खलु? केनापि नागरिकेण मयि दुष्टता आरोपिता वा? तादृशम् आरोपम् अप्राप्नुवन् भवान् कथं निर्णयति यत् अहं दुष्टः इति? अहं स्वार्थी अपि न। प्रजानां जीवनस्य अपेक्षया भवतः जीवनं वैभवोपेतम् अस्ति। अतः भवान् एव परमस्वार्थी। एवं स्थिते कथं मां देशात् निर्गन्तुं वदति भवान्?'' इति पृष्टवान्।

''अये मान्त्रिक! राजा राजप्रासादे निवसेत् इति तु सम्प्रदायः। राजभवने वासेन विशेषसुखं प्राप्यते इति न। मम स्वार्थपरत्वं भवान् निरूपयितुं यदि शक्नुयात् तर्हि अहं राज्यं परित्यज्य निर्गमिष्यामि'' इति उक्तवान् माधवसेनः।

तदा अग्निमित्रः अट्टहासं कृत्वा– ''अये राजन्! अलं चर्चया। भवतः आदेशं पालयन् अहं राज्यात् निर्गमिष्यामि। किन्तु न एकाकी, अपि तु राजकुमार्या सह। यत् करणीयं तत् कर्तुम् अर्हति भवान्'' इति उक्त्वा ततः



अदृश्यः अभवत्।

तस्मिन् एव क्षणे अन्तःपुरे स्थिता माधवसेनस्य एकमात्रपुत्री माधवी अपि अदृश्यतां गता अभवत्।

माधवसेनः किङ्कर्तव्यतामूढः सन् चिन्तया उपविष्टवान्। तदा महामन्त्री आगत्य राजानम् उक्तवान्– ''प्रभो, राजकुमार्यै माधव्यै योग्यः वरः अन्वेष्टव्यः इति चिन्तयन् आसीत् खलु भवान्? तदर्थम् एषः अवकाशः इति भावयतु। यः वीरः मान्त्रिकं मारयित्वा राजकुमारीं रक्षति तस्मै एव राजकुमारीं राज्यं च दातुं शक्यते'' इति।

अनन्यगतिकः माधवसेनः एतं प्रस्तावम् अङ्गीकृतवान्। एषः विषयः राज्ये सर्वत्र सडिण्डिमघोषं प्रसारितः।

एवं वार्ताप्रसारानन्तरम् अपि माधवसेनः तूष्णीम् अतिष्ठन् अन्तःपुरस्य भूगृहे स्थितं महादेव्याः आलयं गत्वा देवीं प्रार्थितवान्– "महामातः! दुष्टान् पराक्रमेण सम्मुखीकर्तुं शक्नुयाम। किन्तु दुष्टशक्तेः पुरतः वयम् अकिञ्चित्कराः भवामः। अतः इदानीं भवती एव शरणम्" इति।

तदा देवी राज्ञः माधवसेनस्य पुरतः प्रत्यक्षीभूय– "दिव्याः काश्चन शक्तयः भवन्तं परीक्षमाणाः सन्ति। तथापि भीतिः मास्तु। भवते एकम् अपूर्वं खड्गं दास्यामि। तस्य स्पर्शमात्रेण या काऽपि दुष्टशक्तिः भवतु, सा विनश्यति" इति उक्त्वा एकं खड्गं तस्मै दत्त्वा अदृश्यतां गतवती।

अपूर्वस्य खड्गस्य प्राप्त्या तृप्तः सन् माधवसेनः खड्गं पार्श्वे स्थापयित्वा निश्चिन्ततया निद्रां कृतवान्।

एतदनन्तरं सप्ताहाभ्यन्तरे माधवी अपूर्वेण तेजसा विराजमानेन सुन्दरेण पुरुषेण सह प्रासादं प्रत्यागतवती।

सः सुन्दरः युवकः माधवसेनं विनयेन नमस्कृत्य– "अहं मान्त्रिकम् अग्निमित्रं मारयित्वा माधवीं रक्षितवान् अस्मि। मम नाम अग्निवर्णः इति। मम पूर्वजाः विदेहराज्यं पालयन्तः आसन्" इति आत्मनः परिचयम् उक्तवान्।

माधवसेनः प्रतिवचनं किमपि अवदन् झटिति कोषात् खड्गम् आकृष्य अग्निवर्णं बलात् ताडितवान्। राज्ञः एतं व्यवहारं दृष्ट्वा माधवी तत्र सम्मिलिताः जनाः च



आश्चर्यं प्रकटितवन्तः। अग्निवर्णः तु किञ्चिदपि न व्रणितः। सः हसन् स्थितवान् आसीत्।

एतत् दृष्ट्वा चकितः माधवसेनः मौनं ततः निर्गतवान्। ततः सप्ताहाभ्यन्तरे अग्निवर्ण-माधव्योः विवाहः सवैभवं सम्पन्नः।

विवाहानन्तरम् अग्निवर्णः पट्टाभिषिक्तः अभवत् अपि। एतदनन्तरम् अग्निवर्णः अग्निमित्रमान्त्रिकरूपेण परिवृत्तः अभवत्। सः माधवसेनं पश्यन् उक्तवान्– "भवतः कुमारी परिणेतव्या इति, राजसिंहासनम् आरोढव्यम् इति च बहोः कालात् मम इच्छा आसीत्। एतदुभयम् अपि युगपत् साधयितुं मया योजना कृता। शक्तेः साहाय्येन माधवीम् अपहृतवान्। अनन्तरं वेषान्तरेण आगत्य अहम् एव ताम् अर्पितवान्" इति।

माधवसेनः क्षणकालम् आलोच्य– "अग्निमित्र ! भवान् योग्यः युवकः एव। मम परीक्षार्थं काश्चन शक्तयः भवन्तम् उपयुक्तवत्यः। मान्त्रिकवेषेण प्रजाः मा भाययतु। योग्येन क्रमेण एतं कोसलदेशं पालयन् कीर्तिमान् भवतु। परीक्षायां मया पराजयः प्राप्तः। अतः अहं किञ्चित्कालम् अरण्ये तपः कुर्वन् पापपरिहारं कृत्वा प्रत्यागमिष्यामि" इति उक्त्वा अन्यं कमपि असूचयित्वा अरण्यं गतवान्।

अपरक्षणे एव मान्त्रिकः अग्निमित्रः पुनरपि अग्निवर्णरूपेण परिवृत्तः आसीत्।

वेतालः एवं कथां समाप्य अवदत्– "राजन्, पापपरिहारार्थम् तपश्चर्यां करोमि



इति उक्त्वा माधवसेनः अरण्यं गतः यत् तत् निरर्थकं कार्यं न वा? वस्तुतः तेन किं पापं कृतम्? स तु प्रजाः पुत्रवत् पालयति स्म। स्वार्थलेशोऽपि न आसीत् तस्मिन्। प्रजावत्सलः धीरः च सः किमर्थं वा मान्त्रिकाय राज्यम् अर्पयित्वा मौनम् अरण्यं गतवान्? तस्य स्थैर्यच्युतेः कारणं किम्? सः किमर्थं वा विवेकभ्रष्टः इव व्यवहृतवान्? एतेषां प्रश्नानां योग्यम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्" इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– "माधवसेनेन पापम् आचरितम् इति तु सत्यम् एव। राज्यस्य रक्षणं तस्य कर्तव्यम्। योग्ये पुरुषे' राज्यरक्षणभारः स्थापनीयः आसीत् तेन। असमर्थाय राज्यम् अर्पितं चेत् प्रजानां हितं नष्टं स्यात्। किन्तु माधवसेनः मान्त्रिकाय अग्निमित्राय राज्यं दत्तवान्, पुत्रीं चापि दत्तवान्। एवं च अपात्राय राज्यं दत्तं तेन। एतत् तु पापकरम् एव। कुलदेवता अपूर्वं खड्गं यच्छन्ती उक्तवती आसीत् यत् काश्चन दिव्यशक्तयः भवन्तं परीक्षमाणाः सन्ति इति। तथापि माधवसेनः मान्त्रिकस्य उपरि खड्गप्रयोगं कृतवान्। अयं च दोषाय। खड्गः दुष्टशक्तेः उपरि प्रयोक्तव्या आसीत्, न तु दिव्यशक्तेः उपरि। खड्गप्रयोगानन्तरम् अपि मान्त्रिकस्य किमपि न जातं यत् तेन ज्ञायते- मान्त्रिके दिव्यशक्तिः एव आसीत् इति। परीक्षार्थम् उद्युक्तायाः दिव्यशक्तेः पुरतः राज्ञः बुद्धिबलं सामर्थ्यं वा अकिञ्चित्करम् एव आसीत्। एवं च अपात्रे राज्यभारस्य निक्षेपणम् एकः दोषः, दिव्यशक्तेः विषये अन्यथाचिन्तनम् अपरः दोषः। अतः एव राजा दोषमार्जनार्थं तपः आचरितुम् अरण्यं गतवान्" इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।



चन्दमामानुबन्धः-१५

# ज्ञानभाण्डागारम्

## सः कः स्यात्?

पूर्वसमुद्रतीरे दिगन्तपर्यन्तं सिकताः एव दृश्यन्ते। समीपे कुत्रापि लघुग्रामः अपि न दृश्यते। कश्चन राजा अश्वम् आरुह्य अङ्गरक्षकभटैः सह समुद्रतीरे प्रयाणं कुर्वन् आसीत्। राज्ञः अश्वस्य खुरः केनचित् वस्तुना घृष्टः अभवत्। ततः अग्निस्फुलिङ्गाः उत्पन्नाः। 'सिकतामये प्रदेशे अग्निस्फुलिङ्गाः कथम् उत्पद्यते?' इति आश्चर्यम् अनुभवन् राजा अश्वस्य खलीनम् आकृष्य गमनं स्थगयन् अवनम्य अधः दृष्टवान्। यतः स्फुलिङ्गाः उत्पन्नाः तत्र सुन्दरशिल्पयुता शिला दृष्टा। एतेन राज्ञः कुतूहलं प्रवृद्धम्। सः भटान् आज्ञापितवान् यत् अत्र खननं कुर्वन्तु इति। सिकतानां मध्ये मन्दिरस्य शिखरभागः दृष्टः। राजा झटिति समीपस्थान् ग्रामजनान् मेलयित्वा तान् सर्वान् खननकार्ये नियोजितवान्। बहूनां दिनानाम् अनन्तरं भूगर्भे किञ्चन मन्दिरं दृष्टम्। तच्च मन्दिरं बहुप्राचीनम् आसीत्। कालवशात् तत् सिकताभिः आच्छन्नम् आसीत्। इदानीम् एवं प्रकटितम् अभवत् च।

एतस्यां घटनायां मन्दिरम् अन्विष्टवतः राज्ञः नाम किम्? तस्य मन्दिरस्य च नाम किम्?

(उत्तरं ३६तमे पृष्ठे)

## अपि भवान् जानाति?

१. एकस्य गोपुरस्य कम्पनेन अपरम् अपि गोपुरं कम्पते। एतादृशं स्थानं कुत्र अस्ति?
२. भारते किं नगरं 'सरोवरनगरम्' इति प्रसिद्धम् अस्ति?
३. बङ्गालखातस्य•अरबसागरस्य च मध्ये स्थितस्य जलसन्धेः नाम किम्?
४. एतस्मिन् जलसन्धौ कः प्रसिद्धः द्वीपः अस्ति?
५. कस्य देवालयस्य कारणतः एषः द्वीपः एवं प्रसिद्धिं गतः?
६. तस्य आलयस्य वैशिष्ट्यं किम्?

(उत्तराणि ३६तमे पृष्ठे)

# अवन्ती उज्जयिनी च

अवन्ती तादृशं प्राचीनं राज्यं, यच्च महाभारतकालात् पूर्वम् एव सुप्रसिद्धम् आसीत्। एतस्य एव अवन्तिका इत्यपि नामान्तरम्।

पूर्वम् अवन्ती द्विधा विभक्तम् आसीत्– दक्षिणावन्ती उत्तरावन्ती चेति। दक्षिणावन्त्याः राजधानी माहिष्मतीनगरं, यस्य च अद्यतनं नाम मान्धाता इति।



# र स वा र्ता:

उत्तरावन्त्याः राजधानी उज्जायनी। (उज्जैनी इति वा) एतत् नगरम् इदानीम् एतेन एव नाम्ना मध्यप्रदेशराज्ये मालवानामके प्रदेशे अस्ति।

२५०० वर्षेभ्यः पूर्वं भारतं षोडशधा जनपदेषु विभक्तम् आसीत् इति प्राचीनबौद्धवाङ्मयात् ज्ञायते। षोडशेषु जनपदेषु अवन्ती अपि अन्यतमम्।

उज्जयिनी न केवलं प्राचीनं नगरम्, अपि तु अस्माकं देशे स्थितेषु सप्तसु पुण्यक्षेत्रेषु अन्यतमम् अपि अस्ति।

सुप्रसिद्धः राजा विक्रमादित्यः उज्जयिनीं राजधानीं परिकल्प्य राज्यशासनं करोति स्म। तस्य आस्थाने कालिदासादयः नव रत्नानि आसन्।

कविकुलगुरुः कालिदासः मेघदूतनामके खण्डकाव्ये उज्जयिन्याः सौन्दर्यातिशयं, क्षिप्रानद्याः रमणीयतां च मनोहारिण्या शैल्या वर्णितवान् अस्ति। उज्जयिनीस्थं महाकालस्य देवालयम् अपि सः तस्मिन् काव्ये वर्णितवान् अस्ति।

चक्रवर्ती अशोकः मौर्यसिंहासनस्य आरोहणात् पूर्वं मौर्यराज्यस्य प्रतिनिधिः सन् उज्जयिन्याः शासनं करोति स्म।

इदानीं द्वादशसु वर्षेषु एकवारम् अत्र कुम्भमेलोत्सवः महता वैभवेन प्रचलति।



## विदेशीयानाम् अपि संस्कृते अभिरुचिः

भारतस्य प्राचीनतमायाः भाषायाः संस्कृतस्य विषये एषु दिनेषु समग्रे प्रपञ्चे विद्वांसः अभिरुचिमन्तः दृश्यन्ते। अमेरिकादेशीयौ व्यास् होस्टन्, डेविड् लाविन् च संस्कृताध्ययनार्थं कम्प्यूटर् प्रोग्राम् सज्जीकृतवन्तौ स्तः। एतस्य आधारेण पाश्चात्याः अपि संस्कृतशब्दान् सम्यक् उच्चारयितुं, पठितुम्, अध्येतुं च अर्हन्ति।

## शेक्सपीयर् नाटकमन्दिरम्

शेक्सपीयर् अभिमानिनः यदा लण्डन्नगरं गच्छन्ति तदा सहजतया ग्लोब्नाटकमन्दिरं द्रष्टुम् इच्छन्ति। यत्र च शेक्सपीयर्नाटकानि प्रदर्श्यन्ते स्म। किन्तु इदानीं तत् नाटकमन्दिरं कुत्र अस्ति? तत् तु बहुपूर्वम् नष्टम् आसीत्। १६१३ तमे वर्षे यदा 'अष्टमहेन्री'नाटकं प्रदर्श्यमानम् आसीत् तदा मन्दिरम् अकस्मात् अग्निसाज्जातम्। किन्तु अचिरात् एव तत् तदा पुनर्निर्मितम्। १६१६ तमे वर्षे शेक्सपीयर् मरणं गतः। तदनन्तरम् एतस्य नाटकमन्दिरस्य विषये आकर्षणं न्यूनं जातम्। एषु दिनेषु एतस्य ग्लोब्नाटकमन्दिरस्य अवशेषाः प्राप्ताः सन्ति। भाविनि काले तत् पुनरपि आकर्षणकेन्द्रं भवितुम् अर्हति।



# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. सुप्रसिद्धस्य लेखकस्य मार्क्सि गोर्की इति ख्यातस्य वास्तविकं नाम किम्?

२. प्रमुखस्य साहित्यकारस्य जार्ज् आर्वेलुवर्यस्य वास्तविकं नाम किम्?

३. ख्यातस्य लेखकस्य साकीवर्यस्य वास्तविकं नाम किम्?

४. कः कविः प्रीतिपात्रं स्वकीयं मार्जारं स्कन्धे स्थापयन् काव्यं विरचितवान्?

५. प्रसिद्धः कः कविः प्रीतिपात्रैः प्राणिभिः पक्षिभिः च सह प्रयाणं करोति स्म?

६. कथासाहित्ये ख्यातः कः लेखकः बह्वीः भाषाः जानाति स्म?

# उत्तराणि

## सः कः स्यात्?

गाला माधवराजः इति। पुरीनगरस्थं जगन्नाथमन्दिरम् इति।

## सामान्यज्ञानम्

१. अहमदाबादनगरे।
२. उदयपुरम्।
३. मन्नार् जलसन्धिः इति।
४. रामेश्वरम्।
५. शिवमन्दिरस्य कारणतः।
६. तत्रत्यं शिवलिङ्गं श्रीरामचन्द्रः एव स्वयं प्रतिष्ठापितवान् इति प्रतीतिः अस्ति।

## साहित्यज्ञानम्

१. अलेक्सी सियपुकोव्।

२. एरिक् ब्लेयिर्।

३. विक्टर् ह्यूगो मन्रो।

४. एड्गर् अलेन् पो।

५. लार्ड् बैरन्। एषः दशभिः अश्वैः, अष्टभिः महाशुनकैः, पञ्चभिः मार्जारैः, एकेन गृध्रेण, एकेन काकेन च सह प्रयाणं करोति स्म।

६. जाकोब् ग्रिम्। (१७८५-१८६३)



# नेहरूकथा–१३

शासनविरोधिव्यवहारस्य निवारणार्थम् अधिकारिणः नायकान् कारागारे स्थापयन्तः आसन् चेदपि स्वातन्त्र्यसङ्ग्रामः दिने दिने तीव्रतां गच्छन् आसीत्। 'भारताय स्वातन्त्र्यदानं विना न अन्या गतिः' इति अवगतम् आंग्लसर्वकारेण। १९४५ तमे वर्षे नेहरू कारागारात् विमुक्तः जातः।

वैस्रराय्, नेहरूनायकत्वे तात्कालिकं सर्वकारं व्यवस्थापितवान्। मुस्लिं लीग्नायकः एं.ए. जिन्ना देशस्य विभागः भवेत् एव इति प्रबलं प्रतिपादितवान्। 'एषा धारणा परिवर्तनीया' इति तं बहवः उक्तवन्तः। किन्तु तेन किमपि प्रयोजनं न सिद्धम्।





द्वितीयस्य जागतिकयुद्धस्य योद्धा, ब्रिटीशराजकुटुम्बे जातः च लार्ड् मौण्ट् ब्याटन् १९४७ तमे वर्षे वैस्रराय् गवर्नर् जनरल् च अभवत्। अधिकारस्य हस्तान्तरीकरणं सुव्यवस्थितं यथा स्यात् तथा कर्तुम् आंग्लसर्वकारेण सः प्रेषितः आसीत्।



देशस्य विभागः भवेत् एव इति मुस्लिं लीग् दृढम् अभिप्रैति स्म। एतदर्थं तेन आन्दोलनम् अपि आरब्धम्। यवनाः हिन्दूनाम् उपरि आक्रमणं कृतवन्तः। हिन्दवः प्रतिप्रहारं दत्तवन्तः। एतस्य कारणतः पञ्जाब्-बङ्गालप्रभृतिषु प्रदेशेषु इतरत्र च मतीयकलहाः प्रवृद्धाः।

अन्ते कांग्रेस्संस्थया देशस्य विभागः अङ्गीकृतः। नेहरू एतं निर्णयं १९४७ तमे वर्षे जून् ३ दिनाङ्के आकाशवाणीद्वारा जनान् श्रावितवान्। एतस्य कारणतः उभयपक्षीयाः अपि लक्षशः जनाः खेदम् अनुभूतवन्तः। विभाजनव्यवस्था आरब्धा।





१९४७ तमे वर्षे अगस्ट् १५ दिनाङ्के भारतं स्वतन्त्रं जातम्। जवहरलाल् नेहरू स्वतन्त्रभारतस्य प्रथमः प्रधानमन्त्री जातः। 'नवभारतस्य निर्माणार्थं जनैः प्रयतनीयम्' इति जनान् बोधितवान् सः।

अनेकाः समस्याः तत्काले सम्मुखम् आगताः। १९४८ तमे वर्षे जनवरी ३० तमे दिनाङ्के गान्धीजी गोलकास्त्रेण मारितः अभवत्। देशे सर्वत्र अश्रुप्रवाहः उद्गतः। नेहरू अपि सहजतया दिग्भ्रान्तः एव। तथापि सः देशस्य हितं मनसि स्थापयन् आत्मानं निगृह्य कर्तव्ये निरतः अभवत्।






केचन संस्थानाधिपतयः चिन्तयन्ति स्म यत् वयं देशात् पृथग्भूय स्वतन्त्रतया तिष्ठामः इति। हैदराबादप्रदेशे हिंसाकृत्यानि प्रवृद्धानि। तत् संस्थानं स्वतन्त्रे भारते विलीनं भवेत् इति ये प्रतिपादयन्ति स्म तेषाम् उपरि संस्थानपराः जनाः आक्रमणं कृतवन्तः।

काश्मीरस्य राजा हरिसिङ्ग् प्रकटितवान् यत् अस्माकं संस्थानं स्वतन्त्रे भारते विलीनं भविष्यति इति। किन्तु एतद्विरुद्धं पाकिस्तानदेशेन सीमावासिनः जनाः प्रेरिताः। ते स्वकीयं बलं प्रदर्शयन्तः श्रीनगरं गतवन्तः। भारतसैन्येन ते ततः दूरं प्रेषिताः।





एवं सतीषु अपि बहवीषु समस्यासु, जवहरः देशे प्रपञ्चे च शान्तिस्थापनार्थम् अहोरात्रं प्रयतमानः आसीत्। १९५४ तमे वर्षे भारतम् आगतः चीनादेशस्य प्रधानमन्त्री चौ-एन्-लाय् शान्तियुतं सहजीवनम् अनुमन्यमानः 'पञ्चशील'सिद्धान्तार्थं हस्ताङ्कदानेन अनुमतिं प्रदर्शितवान्।

किन्तु १९६२ तमे वर्षे चीनादेशेन पञ्चशीलतत्त्वस्य उपेक्षां कुर्वता भारतस्य उपरि आक्रमणं कृतम्। भारतीयं सैन्यं सीमाप्रदेशस्य रक्षणार्थं वीरोचितं युद्धम् अकरोत्। चीनादेशस्य सैन्यं प्रत्यगच्छत्। किन्तु चीनादेशस्य एतेन व्यवहारेण जवहरः नितरां खिन्नः।






१७ वर्षाणि यावत् प्रधानमन्त्रि-स्थानम् अलङ्कृत्य देशस्य अभ्युदयार्थं, प्रापञ्चिकशान्त्यर्थं च कार्यं कुर्वन् जवहरः 'एतस्य शतकस्य अपूर्वः राजकीयनायकः' इति कीर्तिं सम्पादितवान् अस्ति। अन्तिम-श्वासपर्यन्तम् अपि जवहरेण देशस्य हितार्थं कार्यं कृतम्। १९६४ तमे वर्षे मे मासे २७ तमे दिनाङ्के जवहरेण भौतिकदेहः परित्यक्तः। —(समाप्तम्)




# स्वयंवरः

मालवदेशं मङ्गलवर्मा नाम राजा पालयन् आसीत्। यदा सः वृद्धः जातः तदा देशस्य भविष्यविषये तस्य चिन्ता आरब्धा। 'मम अनन्तरं राज्यम् अन्यस्य राज्ञः अधीनं भवति चेत् कष्टं खलु?' इति सः खेदम् अनुभवति। तस्य पुत्रः नास्ति। एका पुत्री अस्ति। तस्याः नाम रत्नमाला इति।

मङ्गलवर्मा कदाचित् स्वकीयां चिन्तां मन्त्रिणं सुगुणपालं निवेद्य परिहारोपायं सूचयितुं प्रार्थितवान्।

मन्त्री सुगुणपालः क्षणकालम् आलोच्य उक्तवान्– "प्रभो! एतस्मिन् विषये चिन्ता करणीया नास्ति। अस्माकं राज्ये क्षात्रविद्यायां परिणताः युवकाः बहवः सन्ति। अतः भवान् राजकुमार्याः स्वयंवरम् उद्घोषयतु। सर्वविधसामर्थ्यानां परीक्षार्थं विविधाः स्पर्धाः आयोजिताः भवन्तु। यः सर्वान् अपि अतिशेते तस्मै राजकुमारीं रत्नमालां ददातु। भावी जामाता समर्थतया राज्यस्य रक्षणं करिष्यति" इति।

राज्ञे एषः प्रस्तावः अरोचत। रत्नमाला अपि एतस्मिन् विषये अङ्गीकारं सूचितवती। एतदनन्तरं राज्ञा स्वयंवरवार्ता राज्ये सर्वत्र सडिण्डिमघोषं प्रसारिता।

स्वयंवरनिमित्तं बह्व्यः स्पर्धाः आयोजिताः आसन्। जयवर्मा नाम युवकः शस्त्रस्पर्धासु शास्त्रस्पर्धासु च सर्वान् जितवान्।

राजा मङ्गलवर्मा जयवर्माणम् अभिनन्दनवचनानि उक्त्वा– "भवान् मम भावी जामाता अस्ति। राज्यस्य उत्तराधिकारी अपि भविष्यति। राजकुमार्याः परिणयात् पट्टाभिषेकतः च पूर्वं भवता एकं प्रमुखं कार्यं करणीयम्" इति उक्तवान्।

"भामहः"

"किं तत् कार्यम्? निश्शङ्कम् आदिशतु" इति महाराजम् उक्तवान् जयवर्मा।

"उत्तरस्यां दिशि स्थिते अरण्ये उग्रशीलः नाम कश्चन महाचोरः अस्ति। सः बहोः कालतः स्वेच्छया लुण्ठनं कुर्वन् प्रजाः पीडयन् अस्ति। तस्य ग्रहणार्थं मया कृताः प्रयत्नाः सर्वे विफलाः जाताः। मालवदेशस्य भाविराजस्य एषा काचित् परीक्षा इति भावयतु। केनापि प्रकारेण सः चोरः उग्रशीलः जेतव्यः। एतदर्थम् अपेक्षितां सेनाम् अपि नेतुम् अर्हति भवान्। अन्यम् उपायं चिन्तयितुम् अपि अर्हति" इति सूचितवान् राजा मङ्गलवर्मा।

जयवर्मा क्षणकालम् आलोच्य उक्तवान्– "महाराज! सैनिकैः सह गत्वा साधनीयं कार्यं न एतत्। सैनिकानां दर्शनमात्रेण सः अन्यं प्रदेशं प्रति पलायनं कुर्यात्। तेन समस्या परिहृता तु न भविष्यति। अतः अहम् एकाकी एव गमिष्यामि। कार्यं साधयित्वा आगमिष्यामि च" इति।

अनन्तरं जयवर्मा उत्तरस्यां दिशि स्थितस्य अरण्यस्य सीमाप्रदेशे स्थितान् ग्रामान् प्रविश्य उग्रशीलस्य वसत्यादिविषये जनान् पृष्टवान्। तेषु ग्रामेषु उग्रशीलस्य जनाः सामान्यजनानां वेषं धृत्वा अटन्ति स्म। ते जयवर्माणं बद्ध्वा स्वनायकस्य समीपं नीतवन्तः।

जयवर्मा आत्मनः परिचयं निवेद्य उग्रशीलम् उक्तवान्– "अहं राज्ये स्थितान्



वीरान् सर्वान् जितवान् अस्मि। राजा मह्यं राजकुमारीं दातुं सिद्धः अस्ति। भवान् अपि अस्मद्देशीयः एव। अतः भवन्तम् अपि जेष्यामि चेत् राजकुमारी राज्यं च मया प्राप्यते" इति।

एतत् श्रुत्वा उग्रशीलः उत्साहेन एव खड्गं हस्तेन स्वीकृतवान्। तयोः खड्गयुद्धम् आरब्धम्। अल्पे एव काले तयोः युद्धं समाप्तम्। जयवर्मा पराजितः अभवत्।

जयेन सन्तुष्टः उग्रशीलः राजधानीं गत्वा राजानम् उक्तवान्– "महाराज! सर्वान् वीरान् जितवन्तं जयवर्माणम् अहं जितवान् अस्मि। अतः राजकुमारी राज्यं च मह्यम् अर्पणीयम्" इति।

एतत् विचित्रं परिणामं श्रुत्वा राजा किङ्कर्तव्यतामूढः जातः। तावता तत्र आगतः जयवर्मा उक्तवान्– "महाराज! उग्रशीलः वदति यत् सः मां जितवान् इति। किन्तु आवयोः युद्धं केनापि न दृष्टम्। जयः सदापि निर्विवादास्पदं स्यात्। अतः सभाम् आयोज्य आवयोः युद्धं व्यवस्थापयतु। सर्वेषां सम्मुखे जयस्य निर्णयः भवतु" इति।

'एतत् एव उचितम्' इति सूचितवान् मन्त्री अपि। अनन्तरं सर्वेषां सम्मुखे तयोः युद्धं प्रवृत्तम्। तस्मिन् युद्धे, जयवर्मा उग्रशीलं लीलया जित्वा तस्य कण्ठसमीपम् खड्गं नीत्वा– "अये, चोराग्रेसर! मालवदेशस्य भावी राजा सन् आज्ञापयन् अस्मि। भवता एतत्क्षणे एव अनुचरैः सह अस्मद्राज्यं परित्यज्य गन्तव्यम्। अन्यथा भवान् प्राणैः



वियुक्तः भवेत्" इति गम्भीरस्वरेण आदिष्टवान्।

तदा प्राणापायात् भीतः उग्रशीलः कम्पमानः सन् जयवर्माणं नमस्कृत्य– "भवतः आज्ञां शिरसा वक्ष्यामि। अद्य एव अनुचरैः सह अन्यत् राज्यं गमिष्यामि। मां कृपया मा दण्डयतु" इति प्रार्थितवान्। ततः विमोचनं प्राप्य निर्गतवान् च।

परमसन्तुष्टः मङ्गलवर्मा अचिरात् एव जयवर्म-रत्नमालयोः विवाहं सवैभवं निर्वर्तितवान्। शुभे मुहूर्ते पट्टाभिषेकः अपि सम्पन्नः।

अनन्तरं कदाचित् मङ्गलवर्मा जयवर्माणं पृष्टवान्– "भोः, भवान् यदा उग्रशीलम् अन्विष्यन् प्रस्थितः तदा भवतः पृष्ठतः मया भवद्रक्षणार्थं गूढचराः प्रेषिताः आसन्। अरण्ये उग्रशीलेन भवान् पराजितः अभवत्। अत्र जनानां पुरतः कथं भवान् तं जेतुं शक्तवान्?" इति।

तदा जयवर्मा मन्दहासपूर्वकम् उक्तवान्– "न्यायनिर्णायकानाम् अनुपस्थितौ प्रवर्तमाना स्पर्धा वास्तविकस्पर्धा न। अतः मया अरण्ये जयार्थं प्रयत्नः एव न कृतः। यदि अहम् इच्छेयं तर्हि तदा अपि तस्य पराजयः क्षणमात्रस्य कार्यम् आसीत्" इति।

"तर्हि तत्र भवता बुद्ध्या पराजयः अङ्गीकृतः?" इति पुनः पृष्टवान् मङ्गलवर्मा।

"आम्। यदि तत्र अहं पराजितः न स्यां तर्हि सः भवतः समक्षं न आगच्छेत्। मया जितः सः ततः अन्यत्र गत्वा लुण्ठनम् अनुवर्तयेत् अपि। पुनः तस्य निग्रहणं कष्टाय भवेत्। अतः राज्यस्य राजकुमार्याः च प्राप्तेः आमिषं प्रदर्श्य तम् अहम् अत्र आनीतवान्" इति उक्तवान् जयवर्मा।

एतत् उत्तरं श्रुत्वा– 'मम जामाता न केवलं विद्यावान् धीरः, अपि तु विवेकी दक्षः च' इति चिन्तयन् मङ्गलवर्मा साधुवचनैः जामातरं श्लाघितवान्।






साल्वः शिशुपालस्य आत्मीयं मित्रम् आसीत्। पूर्वं यदा कृष्णः रुक्मिणीम् अपहृत्य नीतवान् तदा कृष्णं सम्मुखीकुर्वन् एषः साल्वः अपि पराजयम् अनुभूतवान् आसीत्। अतः कृष्णस्य विषये साल्वस्य तीव्रः द्वेषः आसीत् एव। यदा कृष्णेन शिशुपालः मारितः तदा क्रुद्धः साल्वः— 'लोके यादवानां नाम एव यथा न श्रूयेत तथा करिष्यामि' इति प्रतिज्ञाय तपश्चर्यार्थम् अरण्यं गतवान्। मृत्तिकामात्रं खादन् सः शिवं ध्यायन् घोरं तपः आचरितवान्। तस्य तपसा सन्तुष्टः शिवः प्रत्यक्षः अभवत्। साल्वः शिवम् अपूर्वं विमानं प्रार्थितवान्। तदा शिवः तादृशस्य विमानस्य निर्माणार्थं विश्वकर्माणम् आदिष्टवान्। विश्वकर्मा कृष्णवर्णीयं लोहमयं विमानं निर्माय साल्वाय दत्तवान्।

साल्वः एतस्य अपूर्वस्य विमानस्य प्राप्त्या नितरां सन्तुष्टः। तस्मिन् विमाने नानाविधानि अस्त्र-शस्त्राणि आसन्। महतः वृक्षान् अपि लीलया उन्नेतुं शक्नोति स्म तत्। साल्वः एतत् विमानम् आरुह्य द्वारकायाः उपरि आक्रमणम् अकरोत्।

विमानस्य साहाय्येन साल्वः द्वारकायाः उपरि शिलाः, वृक्षान्, अस्त्र-शस्त्राणि च पातितवान्। तदीया सेना नगरद्वाराणि, दुर्गं, प्राकारान्, उद्यानानि च उध्वस्तानि अकरोत्।

एतत् दृष्ट्वा प्रद्युम्नः, नायकत्वं निर्वहन् सात्यकिः, चारुदेष्णः, साम्बः, अक्रूरः, कृतवर्मा इत्यादिभिः योधैः, विशालेन सैन्येन

२९. कुचेलवृत्तान्तः।



सुदर्शनचक्रं साल्वस्य कण्ठस्य च्छेदनम् अकरोत्।

साल्वस्य मरणं दृष्ट्वा क्रुद्धः दन्तवक्त्रः गदाम् उन्नीय– 'कृष्णम् अहम् एव यमसदनं प्रेषयिष्यामि' इति वदन् युद्धार्थम् अग्रे आगतवान्। दन्तवक्त्रः कृष्णस्य बन्धुः एव। कृष्णस्य मातुलस्य पुत्रः सः। कृष्णः अपि एकां गदाम् उन्नीय लीलया चालयन् दन्तवक्त्रस्य उरसि बलात् ताडितवान्। तदा दन्तवक्त्रः गतप्राणः जातः। साल्वेन आरब्धं युद्धं एवं परिसमाप्तम्।

कृष्णस्य कुचेलः नाम आत्मीयं बाल्यमित्रम् आसीत्। तौ उभौ अपि सहपाठिनौ। विद्याभ्यासस्य अनन्तरं तौ वियुक्तौ जातौ। कुचेलः गृहस्थाश्रमम् आश्रितवान्। किन्तु कुचेलस्य गृहे दारिद्र्यदेवी स्थिरं स्थितवती आसीत्। एतादृशं दारिद्र्यं दृष्ट्वा कुचेलस्य पत्नी प्रतिदिनम् अपि अश्रूणि स्रावयति।

कदाचित् सा पतिम् उक्तवती– "कृष्णः मम आत्मीयं मित्रम् इति तदा तदा उच्यते खलु? सः प्रतिदिनम् अपि मुक्तहस्ततया दानं करोति इति श्रूयते। शरणम् आगतान् सदा आदरेण पश्यति इत्यपि श्रुतम्। भवान् तु महतः कुटुम्बस्य भारं वोढुम् अशक्तः सन् कष्टम् अनुभवन् अस्ति। अतः भवता कुतो वा तस्य समीपं गत्वा साहाय्यं न प्रार्थनीयम्? प्रार्थितं चेत् सः किमपि दद्यात् एव खलु?

च सह गत्वा साल्वं सम्मुखीकृत्य युद्धम् आरब्धवान्। तत्समये कृष्णः द्वारकायां न आसीत्। पाण्डवैः कृतस्य राजसूययागस्य निमित्तं गतः सः इतोऽपि न प्रत्यागतः आसीत्।

साल्वपक्षस्य यादवपक्षस्य च मध्ये सप्तविंशतिं दिनानि यावत् युद्धं प्रवृत्तम्। तत्समये द्वारकां प्रति आगच्छन् कृष्णः द्वारकायाः उपरि साल्वेन कृतम् आक्रमणं श्रुतवान्। सः सारथिम् आदिष्टवान् यत् रथं वेगेन चालयतु इति।

साल्व-कृष्णयोः मध्ये घोरं युद्धं प्रवृत्तम्। कृष्णः साल्वस्य अपूर्वं विमानं भञ्जयित्वा समुद्रे पातितवान्। कृष्णस्य हस्ते स्थितं

ब्राह्मणकुलोत्पन्नस्य भवतः याचनम् अनुचितं तु न" इति।

'आत्मीयः कृष्णः द्रष्टव्यः' इति बहोः कालतः चिन्तयन् आसीत् कुचेलः। 'कृष्णस्य दर्शनेन कोऽपि लाभः तु भवेत् एव' इति तस्य अन्तरङ्गं वदति स्म। अतः सः पत्न्याः वचनम् अङ्गीकुर्वन् उक्तवान्– "अस्तु तावत्। गत्वा कृष्णं पश्यामि। गुरुकुल-त्यागानन्तरं सः न दृष्टः एव। चिरात् तं द्रष्टुं गच्छन् अस्मि। अतः रिक्तहस्ततया गमनम् उचितं न भवेत्। गमनसमये किमपि नेतव्यम्। तथा नेतुं योग्यं किमपि अस्ति वा इति पश्यतु" इति।



कुचेलस्य पत्नी गृहे किमपि अप्राप्य प्रतिवेशिनीगृहतः पृथुकम् आनीय लघुना वस्त्रेण बद्ध्वा पत्युः हस्ते दत्तवती।

'अस्मच्छक्त्यनुगुणम् एष पृथुकः एव उपायनम्' इति आलोच्य कुचेलः पृथुकग्रन्थिं स्वीकृत्य द्वारकां प्रति प्रस्थितवान्।

द्वारकायां द्वारपालकाः कुचेलम् आदरेण अन्तः नीतवन्तः। तल्पे शयानः कृष्णः कुचेलस्य आगमनं दृष्ट्वा झटिति उत्थाय सन्तोषेण अग्रे आगत्य कुचेलं प्रीत्या आलिङ्गितवान्। अनन्तरं तम् आदरेण मञ्चे उपवेश्य तदीयौ पादौ प्रक्षाल्य तत् जलं शिरसा धृतवान्। कुचेलस्य शरीरं श्रीगन्धेन स्वयं लेपयित्वा तदीये कण्ठे मालां स्थापितवान्। पत्युः व्यवहारेण एव 'एषः कश्चनः आत्मीयः' इति ज्ञात्वा रुक्मिणी चामरेण तं वीजितवती। कृष्णेन निर्धनब्राह्मणविषये प्रदर्श्यमानम् आदरातिशयं दृष्ट्वा तत्रत्याः सर्वे आश्चर्यचकिताः।

स्वागतोपचारस्य अनन्तरं कृष्णः कुचेलस्य पार्श्वे उपविश्य अध्ययनसन्दर्भे गुरुकुले प्रवृत्ताः घटनाः एकैकशः स्मरन् सन्तोषम् अनुभूतवान्।

कदाचित् गुरुपत्नी समिधम् आनेतुम् एतौ उक्तवती आसीत्। एतौ गहनम् अरण्यं प्रविष्टवन्तौ। तदा अकस्मात् महती वृष्टिः आरब्धा। मेघगर्जनम् अशनिः च दृष्टः। आकाशे तदा तदा तीक्ष्णा तडित् दृश्यते स्म।



एतावता अन्धकारः अपि प्रसृतः। एतौ वृष्ट्या पूर्णतः आर्द्रौ जातौ। अन्धकारकारणतः एतौ मार्गभ्रष्टौ जातौ। प्रातःकालपर्यन्तम् अपि एतौ परस्परयोः हस्तं गृहीत्वा अरण्ये अटितवन्तौ। अनन्तरदिने प्रातः एव गुरुः सान्दीपनिः शिष्ययोः अन्वेषणार्थम् अरण्यम् आगतवान्। शोचनीयस्थितौ स्थितौ शिष्यौ दृष्ट्वा वात्सल्यातिशयेन– "हन्त! अस्मन्निमित्तं कीदृशः प्रयासः कृतः! उत्तमौ शिष्यौ भवन्तौ। भवतोः व्यवहारेण अहं नितरां सन्तुष्टः अस्मि। भवतोः इच्छा पूर्णा भविष्यति" इति उक्त्वा आशिषा अनुगृहीतवान् च।

कृष्णः एतां घटनां श्रावयित्वा कुचेलं पृष्टवान्– "एतां घटनां स्मरति वा भवान्?" इति।

तदा कुचेलः गद्गदस्वरेण– "कृष्ण! कथं वा एतादृश्यः घटनाः विस्मृताः भवेयुः? विपत्काले अपि एतादृश्यः घटनाः एव मनः तोषयन्ति" इति उक्तवान्।

"तदस्तु तावत्, मन्निमित्तं किम् आनीतवान् भवान्?" इति हसन् पृष्टवान् कृष्णः।

तदा कुचेलः क्षणकालं दिग्भ्रान्तः। आत्माना आनीतस्य पृथुकस्य प्रदर्शने तस्य लज्जा। तदा कृष्णः एव कुचेलस्य हस्तात् बलात् पृथुकं स्वीकृतवान्। उद्घाट्य पश्यन्– "अहो पृथुकाः! मम प्रियकरम् एतत्! गुरुकुले सहैव पृथुकं खादामः स्म वयम्। तत् स्मरन् आनीतवान् वा?" इति वदन् किञ्चित् पृथुकं मुखे स्थापितवान्।

"अलं खादनेन। वयम् अपि एतस्य रुचिम् आस्वादयितुम् इच्छामः" इति वदन्ती रुक्मिणी कृष्णस्य हस्ततः पृथुकग्रन्थिं स्वीकृतवती।

स्नानभोजनादिकं समाप्य कुचेलः तस्मिन् दिने कृष्णस्य प्रासादे एव शयनं कृतवान्। 'अहं स्वर्गसुखम् अनुभवन् अस्मि' इति भावना आगता तस्य।

अनन्तरदिने कुचेलः स्वगृहं प्रति प्रस्थितवान्। कृष्णः तेन सह किञ्चिद्दूरम् आगत्य प्रीत्या आलिङ्ग्य तं प्रेषितवान्। कृष्णेन किमपि न दत्तम् आसीत् कुचेलाय।

याचनापराङ्मुखः कुचेलः अपि कृष्णं किमपि न याचितवान् आसीत्। 'कृष्णः महाराजः। अहं तु निर्धनकुले जातः ब्राह्मणः। तथापि सः मां प्रीत्या आलिङ्गितवान्। माम् अनुजम् इव दृष्टवान्। देवम् इव मां पूजितवान्। एतादृशं यत् प्राप्तं तदेव महते सौभाग्याय। आजीवनं दारिद्र्यं मम भाग्यम्। एवं स्थिते कृष्णेन किमपि न दत्तम् इति कुतो वा कृष्णस्य निन्दनम्? पापिनः मम सर्वत्र अपि दुरदृष्टम् एव' इति आलोचितवान् कुचेलः।

यदाः सः ग्रामम् आगतवान् तदा तस्य पुरतः विशालं सौधं दृश्यते स्म। सौधं परितः रमणीयम् उद्यानम्! उद्याने सरोवराणि! सरोवरेषु कमलानि, कुमुदानि, राजहंसाः च! भवने सर्वत्र दासदासीनां सञ्चारः!

"किम् एतत् चित्रम्! मया अन्यं ग्रामं प्रति न आगतं खलु? नैव, मया योग्येन एव मार्गेण आगतम्। तर्हि यत्र मम गृहम् आसीत् तत्र एतत् भवनं कथं वा आगतम्?' इति यावत् कुचेलः आश्चम् अनुभवन् आसीत् तावता देवसदृशाः केचन स्त्रीपुरुषाः वाद्यादिभिः सह तत्र आगत्य तं स्वागतीकृत्य आदरेण अन्तः नीतवन्तः।

साक्षात् लक्ष्मीदेवी इव दृश्यमाना तस्य पत्नी वस्त्राभरणादिभिः अलङ्कृता सती उद्गच्छन्ति आनन्दाश्रूणि कथमपि निगृहणती पत्युः समीपम् आगत्य मौनं पादाभिवन्दनं कृतवती।

एतत्सर्वं दृष्ट्वा कुचेलः– "कृष्णस्य दर्शनमात्रेण एतत्सर्वं प्राप्तम् अस्ति। मया





पृथकः दत्तः यत् तेनैव सः मम शोचनीयां परिस्थितिं ज्ञातवान्। सर्वम् अपि दत्त्वा अपि समचित्तः सन् मौनं स्थितवान् आसीत् सः। नमः कृष्णाय परोङ्गितज्ञाय'' इति उक्त्वा मनसा कृष्णस्य ध्यानं कृतवान्।

सकलैश्वर्येण युक्तः कुचेलः यथाशक्ति दानं कुर्वन्, धर्ममार्गेण गच्छन् पत्नीपुत्रादिभिः सह चिरकालं सुखेन जीवितवान्।

एतदनन्तरं कदाचित् सम्पूर्णं सूर्यग्रहणम् आगतम्। तदा यादवाः सर्वे अनिरुद्धं द्वारकायाः रक्षकरूपेण नियोज्य कुरुक्षेत्रं गतवन्तः। तत्र कृष्णस्य बान्धवाः अपि आगतवन्तः। नन्दगोपः यशोदा च सपरिवारम् आगतवन्तौ। कुन्ती, पञ्च पाण्डवाः, भीष्मः, द्रोणः, धृतराष्ट्रः, गान्धारी, सञ्जयः, विदुरः, कृपः, दुर्योधनः इत्यादयः अपि तत्र आगताः। चिरकालानन्तरं परस्परं सम्मिलिताः ते सन्तोषेण वार्तालापं कृतवन्तः।

तस्मिन् समये पाण्डवानां पत्नी द्रौपदी कृष्णस्य अष्ट पत्नीः दृष्ट्वा उक्तवती– ''कृष्णः भवतीः परिणीतवान् यत् ताः घटनाः श्रोतुम् इच्छामि'' इति।

ताः घटनाः कर्णाकर्णिकया श्रुतवती आसीत् सा। तथापि एतासां मुखात् एव श्रोतुम् इच्छा तस्याः।

''मां शिशुपालाय एव दातुं जरासन्धादयः सर्वे निश्चितवन्तः आसन्। किन्तु एषः कृष्णः तेषां मनोरथं विफलीकृत्य माम् अपहृत्य आनीय परिणीतवान्'' इति स्वस्य विवाहस्य वृत्तान्तं निवेदितवती रुक्मिणी।

''मम पिता सत्राजितः माम् अन्यस्मै कस्मैचित् दातुम् इच्छति स्म। तावता मम पितृव्यः मृतः अभवत्। 'पितृव्यस्य मरणस्य कारणं कृष्णः एव' इति कृष्णस्य उपरि आरोपम् आरोपितवान् मम पिता। अपवादस्य परिहारार्थं कृष्णः अरण्यं गत्वा पितृव्यं मारितवन्तं सिंहम् अन्विष्य, श्यमन्तकमणिं नीतवन्तं जाम्बवन्तं पराजित्य तं मणिं मम पित्रे दत्तवान्। एतेन सन्तुष्टः मम पिता मां कृष्णाय एव दत्तवान्'' इति उक्तवती सत्यभामा।

"आं, मम पिता कृष्णेन सह पञ्चविंशतिं दिनानि यावत् युद्धं कृतवान्। अनन्तरं रामस्य अवतारः एव एषः इति जानन् तं नमस्कृतवान्। श्यमन्तकमणिं दत्त्वा माम् अपि तस्मै समर्पितवान्" इति उक्तवती जाम्बवती।

"अहं कृष्णस्य निमित्तं तपः आचरन्ती आसम्। एतत् ज्ञात्वा अर्जुनेन सह मम समीपम् आगतः कृष्णः मां परिणीतवान्" इति उक्तवती कालिन्दी।

"मम स्वयंवरसन्दर्भे बहवः राजानः आगताः आसन्। तान् सर्वान् पराजित्य कृष्णः मां परिणीतवान्" इति उक्तवती भद्रा।

"मम पिता घोषितवान् आसीत् यत् यः सप्त दृप्तवृषभान् जेष्यति तस्मै एव मम पुत्रीं दास्यामि इति। कृष्णः आगत्य तान् सप्त अपि दृप्तवृषभान् लीलया जित्वा मां परिणीतवान्" इति उक्तवती नीला।

"अहं कृष्णस्य मातुलस्य पुत्री एव खलु? कृष्णः एव परिणेतव्यः इति मम इच्छा आसीत्। एतत् जानन् मम पिता कृष्णाय एव मां दत्तवान्" इति उक्तवती मित्रविन्दा।

अन्ते लक्षणा स्वस्य विवाहस्य वृत्तान्तम् उक्तवती– "मम पिता बृहत्सेनः एकं मत्स्ययन्त्रं निर्माय 'यः मत्स्ययन्त्रस्य भेदनं करोति तस्मै मम पुत्री दीयते' इति घोषितवान् आसीत्। मत्स्ययन्त्रं तु बहिः न दृश्यते स्म अधः स्थापिते जलपात्रे तस्य अस्पष्टं प्रतिबिम्बं दृश्यते स्म। बहवः राजानः मम पित्रा मत्स्ययन्त्रस्य भेदनार्थं स्थापिते धनुषि बाणान् योजयितुम् एव न शक्तवन्तः। जरासन्धः, शिशुपालः, भीमः, अर्जुनः, दुर्योधनः, कर्णः इत्यादयः धनुषि बाणं योजितवन्तः चेदपि मत्स्ययन्त्रं कुत्र अस्ति इति स्पष्टं ज्ञातुं न शक्तवन्तः। कृष्णः तु मत्स्ययन्त्रस्य स्थलं सम्यक् ज्ञात्वा मत्स्यं पातयन् मां परिणीतवान्" इति।

तत्तद्विवाहस्य वृत्तान्तं तत्तस्याः मुखतः एव श्रुत्वा द्रौपदी, कृष्णस्य पत्न्यः च नितरां सन्तुष्टाः।





# तृप्तिकारणम्

हरदत्तः नाम कश्चन पण्डितः पूर्वं गुरुकुलं चालयन् आसीत्। कदाचित् त्रयः युवकाः एकस्मिन् एव दिने गुरुकुलं प्रविष्टवन्तः। तेषां प्राथमिकः विद्याभ्यासः अपि समाप्तः। अनन्तरं गुरुः तान् आहूय उक्तवान्– "भवतां प्राथमिकः पाठः समाप्तः। इतः परम् भवताम् इच्छायाः अनुगुणम् एकैकस्य पाठः अपि पृथक् भविष्यति। अतः कुत्र इच्छा इति वदन्तु तावत्" इति।

तदा नन्दनः नाम प्रथमः उक्तवान्– "श्रीमन्, राजास्थाने उन्नतः उद्योगः प्राप्तव्यः इति मम आशा। एतदनुगुणां विद्याम् अध्येतुम् इच्छामि अहम्" इति।

द्वितीयः भूपतिः उक्तवान्– "वैद्यः सन् महतीं कीर्तिं प्राप्नुयाम् इति मम इच्छा। अतः अहं वैद्यकीयशास्त्रं पठितुम् इच्छामि" इति।

तृतीयः माधवः उक्तवान्– "मम विशिष्टा आशा काऽपि नास्ति। भवान् यत् पाठयति तत् पठितुं सिद्धः अहम्" इति।

"सर्वविधान् पाठान् अपि शृण्वन् भवतु। कुत्रापि विशेषासक्तिः उत्पन्ना चेत् मां वदतु" इति माधवम् उक्त्वा गुरुः हरदत्तः नन्दनम् अर्थशास्त्रं गणितं, भूपतिं वैद्यकीयं च पाठितवान्।

एवम् एव केचन मासाः अतीताः। कदाचित् हरदत्तः पत्न्या सह वार्तालापं कुर्वन् उक्तवान्– "एषु दिनेषु त्रयः मम गुरुकुलं प्रविष्टवन्तः किल। तेषु अन्यतमः नन्दनः तीक्ष्णमतिः। भूपतिः अपि श्रद्धया प्रयत्नेन च विद्याभ्यासं करोति। किन्तु तृतीयस्य माधवस्य एव विषये मम चिन्ता। सः सदापि गुरुकुले न भवति इत्यपि श्रूयते। कुत्रापि अटन् भवति। एतस्य कारणतः गुरुकुलस्य अपकीर्तिः तु न भवेत् खलु?" इति।



तावता हरदत्तस्य प्रधानशिष्येषु अन्यतमः तत्र आगत्य उक्तवान्– "गुरुवर्य! माधवस्य विषये सर्वं ज्ञात्वा आगतवान् अस्मि। सः सदापि पार्श्वस्थे अरण्ये स्थितैः गोपालकैः सह भवति। श्वः एतत् भवान् स्वयं द्रष्टुम् अर्हति" इति।

अनन्तरदिने हरदत्तः माधवस्य अन्वेषणं कुर्वन् अरण्यं गतवान्। एवं गमनसमये तेन कुतश्चित् मधुरः वेणुनादः श्रुतः। हरदत्तः अग्रे गत्वा दृष्टवान्। तत्र एकत्र माधवः, तं परितः गोपालबालाः च उपविष्टाः दृष्टाः। वृक्षस्य अधः उपविष्टः माधवः वेणुं वादयन् आसीत्। सुमधुरम् आसीत् तस्य वेणुगानम्।

एतेन दृश्येन गानमाधुर्येण च वशीकृतः हरदत्तः गानसमाप्तिपर्यन्तं तत्रैव स्थितवान्।

गानस्य समाप्तेः अनन्तरं माधवस्य समीपं गत्वा– "माधव! वेणुवादने एतावत् प्रावीण्यम् अस्ति इति इतः पूर्वं मां किमर्थं न उक्तवान् भवान्? कदा एतत् अभ्यस्तम्? कथम् एतावत् प्रावीण्यं प्राप्तम्?" इति पृष्टवान् हरदत्तः।

तदा माधवः गुरुं नमस्कृत्य उक्तवान्– "श्रीमन्! क्षन्तव्यः अहम्। एषु दिनेषु एतेभ्यः गोपालकेभ्यः एतत् वेणवादनम् अभ्यस्तम्। मम वेणवादने किमस्ति प्रावीण्यम्? प्राथमिकं ज्ञानम् एतत्" इति।

हरदत्तः माधवस्य स्कन्धे हस्तं स्थापयन्– "भोः, भवतः एषा सहजविद्या। परिश्रमेण एतस्यां पाण्डित्यं प्राप्य कीर्तिमान् भवतु" इति आशिषा अनुगृहीतवान्।

दिनानि वर्षाणि च गतानि। विद्याभ्यासं समाप्य नन्दनः राजास्थाने उच्चोद्योगं प्राप्तवान्। भूपतिः अपि विद्याभ्यासस्य अनन्तरं राजधान्याम् एकं चिकित्सालयम् आरब्धवान्। अचिरात् एव तौ कीर्तिमन्तौ जातौ।

माधवः तु वेणुवादनस्य एव अभ्यासं कुर्वन् देशविदेशेषु वेणुवादनकौशलेन जनान् तोषयन् सञ्चरति स्म।

केषाञ्चित् वर्षाणाम् अनन्तरं हरदत्तः निश्चितवान् यत् मम शिष्याणां जीवनं कथम् अस्ति इति द्रष्टव्यम् इति। अतः सः प्रथमं

भूपतेः गृहं गतवान्।

कुशलप्रश्नानाम् अनन्तरं भूपतिः स्वस्य चिकित्सालयं प्रदर्शयन् उक्तवान्– "श्रीमन्! प्रयत्नेन मया वैद्यशास्त्रम् अधीतं, चिकित्सालयः आरब्धः च। आरम्भे मया किञ्चिदिव कीर्तिः प्राप्ता। किन्तु इदानीम् अहं वैद्यवृत्त्या लाभम् एव न पश्यामि" इति।

हरदत्तः तं कानिचन सान्त्वनवचनानि उक्त्वा तेन सह नन्दनस्य गृहं गतवान्। नन्दनः गुरुं महता आदरेण स्वागतीकृतवान्।

नन्दनः बहिस्तात् सुखेन अस्ति इत्येव दृश्यते स्म। तथापि सूक्ष्मतया अवलोकनेन हरदत्तः तर्कितवान् यत् नन्दनं काचित् चिन्ता बाधते इति।

वार्तालापसन्दर्भे नन्दनः विशेषवार्तां काञ्चित् श्रावितवान्– "श्वः राजसभायां माधवस्य वेणवादनं भविष्यति" इति।

अनन्तरदिने ते त्रयः अपि राजसभां गतवन्तः। वेदिकायाम् उपविष्टः माधवः सभासदः एकवारं दृष्ट्वा गानम् आरब्धवान्। गायन् सः इहप्रपञ्चम् एव विस्मृतवान्। सभासदः अपि सङ्गीतरसास्वादने लीनाः जाताः। गानसमाप्तेः अनन्तरं सर्वे उच्चैः हर्षोद्गारं कृतवन्तः।

राजा स्वयं सिंहासनात् अवतीर्य– "अपूर्वं गानामृतम् आस्वादितं मया। भवता गीतेषु जीवः पूरितः आसीत्। अदृष्टपूर्वं पाण्डित्यं भवतः। भवान् अस्माकम् आस्थानस्य वेणुगानविद्वान् सन् सभायाः शोभां वर्धयेत् इति अस्माकम् अपेक्षा अस्ति" इति माधवं



वदन् सुवर्णनाणकानां दानेन सत्कृतवान्।

माधवः राजानं विनयेन नमस्कृत्य– "प्रभो, देशसञ्चारिणः मम पदव्या किं प्रयोजनम्? भवतः कलाप्रीतिः अपूर्वा। मम सञ्चारः कुत्र कुत्र भविष्यति इति भवन्तं सूचयन् भविष्यामि। यदा भवान् सूचयिष्यति तदा अत्र आगमिष्यामि च। अतः पदवीस्वीकारविषये अनुरोधं मा करोतु कृपया" इति उक्त्वा राज्ञा दत्तं धनम् अन्नदानव्यवस्थार्थं समर्पितवान्।

तस्मिन् दिने रात्रिसमये त्रयः शिष्याः गुरुः च सम्मिलिताः। वार्तालापमध्ये नन्दनः हरदत्तं पृष्टवान्– "गुरुवर्य! मया यत् चिन्तितम् आसीत् तत् साधितम्। तथापि जीवने तृप्तिः नास्ति, किमर्थम्?" इति।

"भवान् विद्याभ्यासे निपुणः आसीत् इति तु सत्यम् एव। भवतः विद्याभ्यासस्य लक्ष्यं ज्ञानार्जनं न आसीत्, अपि तु पदवीसम्पादनम् आसीत्। काचित् पदवी प्राप्ता चेत्, इतोऽपि अग्रिमं स्थानं प्राप्तव्यम् इति इच्छा भवति एव। एवं पदवीप्राप्त्या तृष्णा वर्धते। अतः भवतः जीवने तृप्तिः नास्ति" इति नन्दनम् उक्तवान् हरदत्तः।

अनन्तरं भूपतिं पश्यन्– "भवान् धनसम्पादनं लक्ष्यत्वेन भावयन् प्रयत्नेन विद्याभ्यासं कृतवान्। धनम् अपि सदापि तृष्णां जनयति, न तु तृप्तिम्। एवं भवद्भ्यां द्वाभ्याम् अपि मृगमरीचिकायाः अनुसरणं कृतम्। अतः एव जीवने तृप्तिः नास्ति" इति उक्त्वा माधवं पश्यन् पुनः उक्तवान्– "माधवः तु एवं न कृतवान्। अधिकारः धनं वा अशाश्वतम् इति सः जानाति स्म। अतः सः यस्याम् आसक्तिः, ताम् एव विद्याम् अधीत्य परिणतः जातः। इदानीम् अपि सः अधिकारविषये धनविषये च अनासक्तः। सर्वत्र तस्य कीर्तिः प्रसृता अस्ति" इति।

अधिकारस्थानस्य धनस्य च आशया विद्याभ्यासं कृत्वा तृप्तिप्राप्त्यर्थं स्थितः अवकाशः स्वयं दूरीकृतः यत् तदर्थं नन्दनः भूपतिः च खेदम् अनुभूतवन्तौ।





# न्यायदेवता

पूर्वं चीनादेशे चाङ्गः नाम युवकः आसीत्। सः एकाकी निर्धनः च। बाल्ये एव तदीयौ मातापितरौ दिवङ्गतौ आस्ताम्। अन्येषाम् आश्रये वर्धमानः सः अन्यैः उक्तानि कार्याणि कुर्वन् दिनानि यापयति स्म। तदीयम् ऐश्वर्यं नाम पित्रा दत्तम् अल्पं गृहम्। एतस्य गृहस्य विषये तस्य विशेषाभिमानः।

चाङ्गस्य गृहस्य पार्श्वे एव कस्यचित् वणिजः गृहम् आसीत्। सः वणिक् इच्छति स्म यत् कथमपि चाङ्गं स्वस्य कर्मकरत्वेन नियोज्य केनापि व्याजेन तदीयं गृहं, सा भूमिः च वशीकरणीया इति। चाङ्गः तु वणिजः स्वभावं सम्यक् जानाति। अतः सः कदापि वणिजः कर्मकरत्वं न अङ्गीकृतवान्। केनापि व्याजेन तदीयं प्रस्तावं विनयेन निराकरोति स्म सः।

यदा चाङ्गः ज्येष्ठः जातः तदा तस्य समीपे धनं सङ्गृहीतम् अभवत्। अनाथबालकत्वेन वर्धितः एषः तरुणः सन्तोषेण दिनानि यापयति यत् तेन वणिजः मनसि असूया उत्पन्ना।

चाङ्गस्य सन्तोषमयजीवनस्य कारणं किम् इति ज्ञातव्यम् इति निश्चितवान् वणिक्। सः कदाचित् रात्रौ चाङ्गस्य गृहस्य समीपं गत्वा वातायनद्वारा अन्तः दृष्टिं प्रसारितवान्।

चाङ्गः एकत्र उपविष्टः अस्ति। तस्य पार्श्वे कश्चन गर्तः दृश्यते। चाङ्गः सुवर्णनाणकानि गणयित्वा गर्ते स्थितायां पेटिकायां पातयति। अन्ते सः कोषस्थानि सामान्यनाणकानि अपि पेटिकयां स्थापयित्वा पेटिकां पिधाय तदुपरि काष्ठफलकं स्थापयित्वा काष्ठफलकस्य उपरि 'टोङ्गो' विग्रहं स्थापितवान्। पूजावस्तूनि अपि तत्रैव



स्थापयित्वा शय्यां प्रसार्य सुप्तवान्।

एतत्सर्वं दृष्ट्वा स्वगृहं प्रत्यागतवता वणिजा तस्यां रात्रौ किञ्चिदपि निद्रा न प्राप्ता।

'एषः बालः कियन्ति सुवर्णनाणकानि सङ्गृहीतवान्! तानि सुवर्णनाणकानि कथमपि स्वायत्तीकरणीयानि एव' इति आलोचितवान् वणिक्।

अनन्तरदिने, चाङ्ग् यदा बहिः गतः तदा एषः वणिक् कथमपि चाङ्गस्य गृहं प्रविष्टवान्। टोङ्गोविग्रहम् अपसार्य फलकस्य अधः पेटिकायां स्थितानि सुवर्णनाणकानि स्वस्य स्यूते स्थापितवान्। अनन्तरं पेटिकायाः द्वारं पिधाय काष्ठफलकं टोङ्गोविग्रहं च यथापूर्वं स्थापयित्वा सन्तोषेण स्वगृहं गतवान्। सुवर्णनाणकानि रहसि स्थापितवान् च।

सायङ्काले चाङ्गः गृहं प्रत्यागतः। यदा तेन पेटिका उद्घाटिता तदा तत्र सुवर्णनाणकानि न दृष्टानि। सम्यक् आलोच्य चाङ्गः निश्चितवान् यत् यः मदीयं धनम् अपहृतवान् सः कश्चन सुपरिचितः एव स्यात् इति।

अनन्तरदिने प्रातः सः ग्रामस्य न्यायाधिकारिणः समीपं गत्वा चौर्यस्य वृत्तान्तं निवेद्य 'मदीयं धनम् अहं यथा प्रतिप्राप्नुयां तथा करोतु कृपया' इति प्रार्थितवान्।

न्यायाधिकारी विविधैः प्रश्नैः चाङ्गस्य पूर्वापरं सम्यक् ज्ञात्वा तं प्रेषितवान्। 'चाङ्गस्य प्रतिवेशी वणिक् एव चौर्यं कृतवान् स्यात्' इति निश्चितवान् सः। अतः वस्तुस्थितेः ज्ञानार्थं चाङ्गस्य गृहस्य समीपे एकं गुप्तचरं नियोजितवान्।

दिनद्वयं यावत् चाङ्गस्य गृहस्य समीपं कोऽपि न आगतः। तृतीये दिने रात्रौ वणिक् विना शब्दं चाङ्गस्य गृहस्य समीपम् आगत्य वातायनद्वारा अन्तः दृष्टिं प्रसारयन् आसीत्।

गुप्तचरः एतत् दृष्टवान् एव। सः धावन् गत्वा न्यायाधिकारिणं प्रवृत्तं समग्रं निवेदितवान्। 'वणिक् एव चोरः इत्यत्र सन्देहः एव नास्ति' इति निश्चितवान्

न्यायाधिकारी।

इतःपरं वणिजः चौर्यं प्रमाणीकरणीयं, वणिक् बद्धव्यः च। एतदर्थम् एकम् उपायं चिन्तितवान् न्यायाधिकारी। चाङ्गम् आहूय चोरग्रहणार्थं किं किं करणीयम् इति सूचितवान् अपि।

चतुर्थे दिने रात्रौ अपि वणिक् विना शब्दम् आगत्य वातायनद्वारा चाङ्गस्य गृहस्य अन्तः दृष्टिं प्रसारितवान्। तदा तेन एकं विचित्रं दृश्यं दृष्टम्। वातायने कस्याश्चित् स्त्रियः पृष्ठभागः दृश्यते स्म।

तां भक्त्या नमस्कृतवान् चाङ्गः। सा स्त्री चाङ्गम् उक्तवती– "वत्स! मयि भवतः कीदृशी भक्तिः अस्ति इति अहं जानामि। शतशः वर्षेभ्यः भवतः वंशीयाः मां पूजयन्तः सन्ति। भवतः गृहे अन्याय्यं जातम् इति मया ज्ञातम्। अतः प्रत्यक्षा अभवम्। भवतः सम्पत्तिः केन अपहृता इति जानामि। तेन अपहृतानि सहस्रं नाणकानि अपि यथा प्रत्यागच्छेयुः तथा करोमि। भवान् चिन्तां मा करोतु" इति।

एतानि वचनानि वणिजा स्पष्टं श्रुतानि। तस्य तु महत् आश्चर्यम्। 'सहस्रं नाणकानि मया न नीतानि खलु? तत्र शतं नाणकानि एव आसन्। मया सम्यक् एव गणितम्' इति आलोच्य सः धावन् गृहं गतवान्। गृहे गोपितं नाणकस्यूतम् उद्घाट्य नाणकानि गणयितुम् आरब्धवान् च।

तावता न्यायाधिकारी दशभिः भटैः सह आगत्य वणिजं बद्ध्वा नीतवान्।

अनन्तरं विचारणा प्रवृत्ता। वणिक् अनिवार्यतया स्वकीयम् अपराधम् अङ्गीकृतवान्। न्यायाधिकारी मासत्रयस्य कारागारवासेन तं दण्डितवान्। चाङ्गस्य धनं प्रतिदापितवान् च।

न्यायान्यायविचारणे टोङ्गोदेवता न्यायाधिकारिणः साहाय्यं करोति इति प्रथा चीनादेशे प्रसृता। अतः यावत् सः न्यायाधीशः आसीत् तावत् चीनादेशे अन्याय्यं किमपि न प्रवृत्तम्।





# उषादेवी

जगत्सृष्टेः आरम्भे जलमध्यंतः भूमिः उपरि आगता। भूमौ जीवप्रपञ्चः उद्भूतः। किन्तु सूर्यस्य अभावतः लोके सर्वत्र तापस्य अभावः।

प्राणिनः सर्वे अन्धकारे एव जीवनं यापयन्ति स्म। अन्धकारः क्रूरजन्तूनां साहाय्यकं भवति स्म। अतः जनाः तैः जन्तुभिः नितरां पीडिताः भवन्ति स्म। प्रकाशस्य अभावतः जनाः कार्यं न कुर्वन्ति स्म। शरीरश्रमस्य अभावतः विविधैः रोगैः पीडिताः भवन्ति स्म। एवं मानवानां जीवनं सर्वथा कष्टकरम् आसीत् तदा।

एवम् एव कालः गतः। कदाचित् कश्चन, ज्ञानी जनान् मेलयित्वा उक्तवान्– "जगत् सृष्टवान् ब्रह्मा सूर्यम् अपि सृष्टवान् इति अहं भावयामि। दिगन्ते प्रकाशः दृश्यते यत् तदत्र प्रमाणम्। यदि वयं तं सूर्यभगवन्तं प्रार्थयेम तर्हि सः प्रकाशदानेन अस्मान् अनुगृह्णीयात् एव। तदा प्रकाशः, तापः च लभ्यते। क्रूरमृगाणां पीडा न्यूना भविष्यति। अस्मासु अपि नवोत्साहः उत्पद्यते। आरोग्यं चापि वर्धते। किन्तु सूर्यसमीपं गत्वा अस्माकं निवेदनं कः श्रावयेत्?" इति।

ज्ञानिनः विचारः सर्वेभ्यः अरोचत। एतादृशेन कार्येण हितं सेत्स्यति इति ते ज्ञातवन्तः। किन्तु तावद्दूरं गन्तुं कस्यापि धैर्यं नास्ति।

तदा षष्टिवर्षीयः वृद्धः उत्थाय उक्तवान्– "मित्राणि, अहं तु अन्तिमे वयसि अस्मि। मम स्थित्या कस्यापि किमपि विशेषप्रयोजनं न भवति। अतः अहं भगवतः सूर्यस्य समीपं गत्वा कार्यं साधयित्वा प्रत्यागमिष्यामि। मम पादयोः इतोऽपि शक्तिः अस्ति एव" इति।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

तदा कश्चन युवकः उत्थाय उक्तवान्– "तात! वृद्धाः एतत् कार्यं साधयितुं न अर्हन्ति। प्रयाणं कदा समाप्येत इति कोऽपि न जानाति। तरुणस्य मम तु शरीरसामर्थ्यम् अधिकम्। प्रयाणे आगतानि कष्टानि सोढुम् अपि समर्थः अहम्। अतः अहम् एव गमिष्यामि" इति।

तावता कश्चन बालः उत्थाय उक्तवान्– "एतस्य कार्यस्य साधनार्थं बहूनि वर्षाणि आवश्यकानि। अहम् इदानीं दशवर्षीयः। यदि भवन्तः मां प्रेषयेयुः तर्हि वार्धक्यसमये वा अहं सूर्यं द्रष्टुं शक्नुयाम्। एतादृशं दीर्घं प्रयाणं कर्तुं भवत्सु कस्यापि वयोर्हता अस्ति" इति।

तदा जनानां मध्यतः विंशतिवर्षीया तरुणी उत्थाय उक्तवती– "अत्र शृण्वन्तु सर्वे। एतत्कार्यम् एकेन आयुर्मानेन समाप्येत इति मम तु न भाति। अतः अहम् एव प्रस्थानं करोमि। मया भगवान् भास्करः द्रष्टुं न शक्यः। किन्तु अहं गर्भवती अस्मि। मार्गे मम पुत्रः उत्पत्स्यते। तम् एतस्मिन् कार्ये नियोजयिष्यामि। अतः कृपया अनुमतिदानेन अहम् अनुग्रहीतव्या" इति।

एवम् उक्तवत्याः नाम उषादेवी इति। तस्याः विचारः सर्वैः अङ्गीकृतः।

प्रयाणार्थम् उद्युक्ता सा जनान् उक्तवती– "अहं यस्यां दिशि गच्छन्ती अस्मि ताम् एव दिशं पश्यन्तः तिष्ठन्तु भवन्तः। यदा कार्यं सेत्स्यति तदा अहं महान्तम् अग्निं ज्वालयिष्यामि। पुत्रद्वारा कारयिष्यामि वा।



तस्य अग्नेः ज्वालया भवद्भिः ज्ञातव्यं यत् भगवतः सूर्यस्य अनुग्रहः जातः इति'' इति।

सा ततः प्रस्थितवती। ततः प्रस्थाय अष्टमे मासे एकं पुत्रं प्रसूतवती सा। पुत्रेण सह अग्रे गता सा। एवं प्रमाणम् अनुवृत्तम्। यदा बालः चलितुं समर्थः जातः तदा सः अपि मात्रा सह पदानि स्थापितवान्।

एवं सप्ततिः वर्षाणि अतीतानि। उषादेवी इदानीं वृद्धा। सा पुत्रम् उक्तवती– ''वत्स! इतोऽपि अग्रे अहं पदानि स्थापयितुं न शक्नोमि। अग्रिमं प्रयाणं भवता एकाकिना करणीयम्। यदा सूर्यस्य अनुग्रहः भविष्यति तदा महता परिमाणेन अग्निं ज्वालयतु। तेन अस्माकं जनाः सन्तुष्टाः भविष्यन्ति। लोकहितकरस्य कार्यस्य साधनेन भवान् अपि पुण्यं प्राप्स्यति'' इति।

उषादेव्याः गमनानन्तरं शतं वर्षाणि अतीतानि। जनाः तु प्रतिदिनम् अपि तया यस्यां दिशि गतं, तां दिशं कातरतया पश्यन्ति।

कदाचित् ते तस्यां दिशि अरुणां कान्तिं दृष्टवन्तः। जनाः अत्यानन्देन नृत्यं कुर्वन्तः उद्घोषितवन्तः– ''तत्र पश्यन्तु! उषादेवी कार्यं साधितवती एव!'' इति!

ततः अल्पे एव काले भगवान् भास्करः अपि उदितः। जनैः प्रकाशः, औष्ण्यं च प्राप्तम्। सूर्यस्य अनुग्रहतः जनाः आरोग्यम् अपि प्राप्तवन्तः।

उषादेवी यस्यां दिशि गतवती सा एव पूर्वा दिक्। जनाः इदानीम् अपि तां दिशं पश्यन्ति। उषःकालस्य प्रतीक्षां कुर्वन्ति ते। उषःकालः आसन्नः चेत् उत्थाय दैनन्दिनकार्याणाम् आरम्भं कुर्वन्ति।

उषादेवी लोकहितार्थम् आत्मनः जीवनं समर्पितवती। एवं जीवनं समर्पयन्ती सा बोधयति यत् सर्वैः लोकहितकार्यार्थम् स्वयम् उद्युक्तैः भवितव्यम्, तादृशं कार्यं कदाचित् एकेन आयुर्मानेन सिद्धं न भवेत्, तथापि प्रयत्नः तु न परित्यक्तव्यः इति।



## वृक्षारोहणसमर्थः कर्कटकः



राबर् क्र्याब् (बर्गस् लाटो) नामकः कर्कटकः नारिकेलफलखादनार्थं वृक्षस्य आरोहणं करोति।



कण्टकमयपुच्छयुतः गगनकोकिलः सर्वेषां पक्षिणाम् अपि अपेक्षया अधिकेन वेगेन उड्डयते। एतस्य उड्डयनवेगः प्रतिघण्टं १०६.७५ मैल् भवेत्।

## अतिवेगेन उड्डयनसमर्थः पक्षी

## हिमात् आत्मानं रक्षति पुष्पम्

उन्नतेषु पर्वतशिखरेषु क्रोफुट् (रानस्कुलस् ग्लासियालिस्) नामकं सुन्दरं पुष्पं विकसति। एतस्य अन्तः स्थितः मकरन्दः एव एतत् पुष्पं हिमाघातात् रक्षति।



# कार्यक्रमः

| | |
|---|---|
| I – कथम् आसीत् कार्यक्रमः? | How was the programme? |
| II – उत्तमः इत्येव वक्तुं शक्यते। | Can say it was good. |
| I – उल्लेखार्हः अंशः कः? | What were the highlights? |
| II – मुख्यातिथेः भाषणम्। दशनिमेषान् यावत् सः भाषणं कृतवान्। उत्तमं सारवत् भाषणं तत्। सुविचिन्त्य भाषणं कृतं तेन। | The chief guest's address. He spoke for 10 minutes. It was a well thought out speech, full of good ideas. |
| I – अध्यक्षभाषणं कथम् आसीत्? | How was the president's address? |
| II – हा हन्त! सर्वथा शिरोवेदनाजनकम्! घण्टां यावत् भाषणम्। प्रायः स एव न जानाति स्म यत् आत्मना किम् उक्तम् इति। न तत्त्वं, न सङ्गतिः। | Oh, my god, it caused headache. It was an hour-long speech and it seemed he himself did not know what he was speaking about. There was no substance and no merit in it. |
| I – मनोरञ्जनकार्यक्रमाः न आसन् वा? | There were no entertainment pro grammes? |
| II – स्वागत-भाषणादीनां मध्ये मध्ये तादृशाः कार्यक्रमाः योजिताः आसन्। एकः बालकः एकपात्राभिनयं कृतवान्। अपूर्वः अभिनयः। | There were, at intervals of welcome speech and other items of the agenda. A boy did mono-acting; it was marvellous. |
| I – जनाः कति आसन्? | What was the audience like? |
| II – प्रायः द्विसहस्राधिकाः। | Maybe, more than two thousand! |
| I – संस्कृतकार्यक्रमार्थं तावन्तः जनाः? | That many for a Sanskrit programme? |
| II – अथ किम्? ते सर्वे परस्परं संस्कृतेनैव सम्भाषणं कुर्वन्तः आसन् अपि। | Why not? They were also conversing in Sanskrit! |



## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

**विजितां शीर्षिकां मे-९० मासे प्रकटयिष्यामः।**






* उपरितनं चित्रद्वयं पश्यन्तु। * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मार्च्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। * अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। * स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। * शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। * अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

### 'ज़नवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **वीणानिक्वाणोऽयं वाणीतोषाय।**

द्वितीयचित्रम् - **दीननिनादोऽयं पिचण्डपोषाय।**

प्रेषिका - सौ॥ मेधादेवी एम्. तापस, मुळगुन्द, गदग-५८२११७, कर्णाटकम्।


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) रू. ३६-००

**डाल्टन् एजन्सीस्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

**चन्दमामा पब्लिकेषन्स्**, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास्-६०००२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

**Statement about ownership of CHANDAMAMA (Sanskrit)**
**Rule 8 (Form VI), Newspapers (Central) Rules, 1956**

| | |
|---|---|
| *1. Place of Publication* | 'CHANDAMAMA BUILDINGS'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *2. Periodicity of Publication* | MONTHLY<br>1st of each calendar month |
| *3. Printer's Name* | B.V. REDDI |
| *Nationality* | INDIAN |
| *Address* | Prasad Process Private Limited<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *4. Publisher's Name* | B. VISWANATHA REDDI |
| *Nationality* | INDIAN |
| *Address* | Chandamama Publications<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *5. Editor's Name* | B. NAGI REDDI |
| *Nationality* | INDIAN |
| *Address* | 'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |
| *6. Name and Address of individuals who own the paper* | CHANDAMAMA PUBLICATIONS<br>PARTNERS:<br>1. Sri B. VENKATRAMA REDDY<br>2. Sri B.V. NARESH REDDY<br>3. Sri B.V. SANJAY REDDY<br>4. Sri B.V. SHARATH REDDY<br>5. Smt. B. PADMAVATHI<br>6. Sri B.N. RAJESH REDDY<br>7. Smt. B. VASUNDHARA<br>8. Kum.B.L. ARCHANA (Minor)<br>9. Kum.B.L. ARADHANA (Minor)<br>(Minors admitted to the benefits of Partnership)<br><br>'Chandamama Buildings'<br>188, N.S.K. Salai<br>Vadapalani, Madras-600 026 |

I, B. Viswanatha Reddi, hereby declare that the particulars given above are true to the best of my knowledge and belief.

**B. VISWANATHA REDDI**
*Signature of the Publisher*

*1st March 1990*